# मित्रगोष्ठी-पत्रिका ।

## (मासिकं संस्कृतपत्रम् ।)

तृतीय वर्षम् ।

१८२८ शकाब्दाः ।

श्रीविधुशेखरभट्टाचार्येण सम्पादिता ।

341

वाराणस्याम् ।

श्रीताराचरणभट्टाचार्येण

मित्रगोष्ठी-कार्यालयात् प्रकाशिता च ।

वार्षिक मूल्यम् सार्द्धैकरूप्यकम् ।

## प्रबन्धलेखकानां नामानि—

महामहोपाध्याय पण्डित श्रीराममिश्रशास्त्री, महामहोपाध्याय प० श्रीयादवेश्वरतर्करत्नः, पं० श्रीमहेशचन्द्रतर्कचूड़ामणिः पं० श्री सत्यव्रतसामश्रमी, पं० श्रीजयचन्द्रसिद्धान्तभूषणः, पं० श्रीमधुसूदनविद्यावाचस्पतिः, पं० श्रीरामावतारपाण्डेयः एम. ए. साहित्याचार्यः, पं० श्रीनीलकण्ठशास्त्री, पं० श्रीअप्पाशर्मविद्यावाचस्पतिः, पं० श्रीगणपतिशास्त्री, पं० श्रीवामनरामजोशी, पं० श्रीगिरिजाप्रसादद्विवेदी, पं० श्रीरमेशचन्द्रवेदान्तसागरः, पं० श्रीचारुचन्द्रवन्द्योपाध्यायः वि. ए., पं० श्रीप्रियरत्नभिक्षुः, पं० श्रीरामप्रसन्नब्रह्मचारी, पं० श्रीपरमानन्दः, पं० के० वासुदेवशर्मा, पं० श्रीसन्तोषकुमारमजुमदारः, पं० श्रीयोगेन्द्रनारायणस्मृतितीर्थः, कविरत्नं श्रीज्ञानसुन्दरी, श्रीविधुशेखरभट्टाचार्यश्च ।

१८२८ शकाब्दे प्रकाशितायाः

# मित्रगोष्ठीपत्रिकायाः

## अकारादिक्रमेण विषयसूची ।

# मित्रगोष्ठी-पत्रिका ।

(मासिकं संस्कृतपत्रम् ।)

"संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्" ।

ऋग्वेदः ।

तृतीये वर्षे] १८२८ शकाब्दाः, वैशाखः । [प्रथमसंख्या

## नववर्षे मंगलाशंसनम् ।

"ग्रीष्मो हेमन्त ऋतवः शिवा नो,
वर्षाः शिवा अभया शरन्नः ।
संवत्सरोऽधिपतिः प्राणदो नोऽ-
होरात्रे कृणुतां दीर्घमायुः ॥ १ ॥
शान्ता पृथिवी शिवमन्तरीक्षं,
द्यौर्नो देव्यभयं नो अस्तु ।
शिवा दिशः प्रदिश उद्दिशो न
आपो विद्युतः परिपान्तु सर्वतः ॥ २ ॥
आपो मरीची प्रवहन्तु नो धियो
धाता समुद्रो वहन्तु पापं ।
भूतं भविष्यदभयं विश्वमस्तु मे
ब्रह्माधिगुप्तः स्वाक्षराणि स्वाहा ॥ ३ ॥
संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ ४ ॥ *

* यूयं सर्वे संगता भवत, परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं वदत, युष्माकं मनांसि एकरूपमेवार्थमवगच्छन्तु—यथा खलु प्राचीना देवा ऐकमत्यं प्राप्ताः हविर्भागं स्वीकुर्वन्ति ॥ ४ ॥ ऋग्वेदः. १०म. ७९ सू. १म.

समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषां
समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥ ५
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥ ६ ॥"

---

## नैराश्यम् ।

किमेतेषामाशाकुहकपतिता पश्यसि मुखं,
न खल्वेते कुर्य्युः किमपि तव मातर्हितकरम् ।
दृशोर्धारां गाढां जहिहि, ननु दूरीकुरु तथा
धराधूलीपात वद तव किमेभिः सुतवरैः ॥ १ ॥
इमे विज्ञम्मन्याः प्रमदमदिरामत्तमतयः
सुखस्वप्नालोके भ्रमविलसिते वा क्वचिदपि ।
न किञ्चिद्यच्छन्ति, क्षणमपि न चेच्छन्ति भवतीं,
मुधैवाशां मातर्मनसि बत तां तां कृतवती ॥ २ ॥
निनादैर्वाग्भंग्या गगनतलमेते ध्वनयितुं
समर्थास्ते पुत्रा न तु किमपि कर्तुं स्वमुचितम् ।

---

अथर्ववेदेऽस्य मन्त्रस्य प्रथमांशे "संजानीध्वं सं पृच्यध्वमिर्मि
पाठो दृश्यते अस्यार्थः—यूयं समानज्ञानयुक्ता भवत, तथा सन
परस्परं संसृष्टकाया भवतेति" ।

एषां जनानां मन्त्रः समानोऽस्तु, समितिः समानास्तु, अन्तःक
च समानमस्तु, चित्तं च—विचारजं ज्ञानमेषां परस्परस्यैकार्थेन स
नमस्तु; अहं युष्माकमेकविधमेव मन्त्रमभिमन्त्रये—एकविध्याय सं
रोमि, तथा युष्माकं साधारणेन हविषा जुहोमि ॥ ५ ॥

अथर्ववेदे तु 'मन' इत्यत्र 'व्रत'मिति पठितम् । कर्मनामैतत्,त
च कर्माण्येषां समानमस्त्विति तत्रार्थः । अथर्व. ७ अ० ६४ सू.२ म.

युष्माकमध्यवसाय एकविधोऽस्तु, युष्माकं हृदयान्येकविध
सन्तु, युष्माकमन्तः करणमेकविधमस्तु—यथा खलु युष्माकं सर्वं
भवति ॥ ६ ॥ तत्रैव ४ मः ।

वचस्यन्यच्चेतस्यपरमितरत् कर्मणि पुनः
सदा येषां, तेभ्यो भवतु तव लभ्यं किमिव नु ॥ ३ ॥
ब्रुवन्त्येते शश्वज्जननि तव सेवा समुचिता
विधेयं दौर्गत्यप्रशमनमथो देयमिति च ।
गतः कालो गच्छत्यपिच विपुलस्तस्य वचसो
विसंवादाघातं ननु किमपि सम्प्रत्यपि कृतम् ॥ ४ ॥

---

## वैदिक वृत्तान्तः ।

### विश्वोत्पत्तिः ।

परिदृश्यमानस्यास्य स्थावरजंगमात्मकस्य जगत उत्पत्तिः कदा नु कुतो वा विहितेति साधारणोऽयं विषयोऽस्मदीयानां दर्शनपुराणादीनां शास्त्राणाम् । एतादृगपरः कश्चित् दुरवगाहो विषयोऽस्ति न वेति संशयास्पदमेव । कियदस्य दुरवबोधत्वमितीदं सर्वदर्शिनां पूज्यपादानामृषीणामेव वचनं सुष्ठु प्रतिपादयति—

"इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेद" इति ॥
ऋग्वेद १०. १२९.

अस्मदीयानां शास्त्राणां वेद एवैकं मूलम्, तत्प्रामाण्येनैव ह्यमीषां प्रामाण्यम् । यद्वेदे सूक्ष्मसंक्षिप्तम्, तदेवैतेषु युक्तितर्कादिविविधवचनोपन्यासैः प्रपञ्चितमिति वदन्ति । अतो विश्वोत्पत्तिविचारस्य वेदे किं खलु सूत्रमधिगत्यार्वाचीनाः शास्त्रकारास्तानि तानि मतानि प्रकाशयामासुस्तदेवेह किञ्चित् प्रदर्शयिष्यते ।

वेदस्य बहुषु मन्त्रेषु सृष्टिं प्रति सूर्यस्य कारणत्वमवगम्यते । एवैकस्मिन् मन्त्रेऽयं स्थावरस्य जंगमस्य चात्मत्वेन वर्णितः ।*

---

* "सूर्य आत्मा जगतस्तस्थुषश्च" इति ऋ. १. ११५. १.

बहुकार्यकारणत्वादेव चायमेकोऽपि बहुभिर्नामभिर्व्यपदिश्यते ।(१)त
स्मादेव च 'विश्वकर्मेति 'शब्द उत्पन्नइति श्रुवन्ति। विश्वकर्मदैवत्यं सू
द्वयम् ऋग्वेदे दृश्यते तत एव किञ्चित् उद्धृत्येह प्रदर्शयामः, येनाच
र्याणामृषीणां सृष्टितत्त्वचिन्ता कथमिवासीदित्यस्य परिचय उपलभ्ये
लोके हि घटं चिकीर्षन् कुलालो गृहादिकं किञ्चित् स्थानमधिष्ठा
मृद्रूपेणारम्भणद्रव्येण चक्रादिरूपैरुपकरणै घटं निष्पादयति। जग
सृष्टेः पूर्वमीश्वरस्य तु न तत्सर्वं किञ्चित्सम्भवतीति वक्ष्यमाणेषु मन
ष्वाक्षिप्य समाधानादिकं विधीयते। तद्यथा—[ऋग्वेद १०. ४१.]

"द्यावापृथिव्योरुत्पादनवेलायामीश्वरस्य किमधिष्ठानमासीत
तथा तयोरारम्भणद्रव्यं कतमत् कथं वा भवेत्? यस्मादधिष्ठानादा
रम्भणद्रव्याच्च सर्वद्रष्टा विश्वकर्मा परमेश्वरो महिम्ना भूमिं जनय
दिवं सृष्टवान्"। (२)

"सर्वतो व्याप्तवदननयनबाहुचरणः परमेश्वर एक एव द्यावापृ
व्यौ जनयन् बाहुभ्यां दिवं पादैश्च पृथिवीं संधमति"। (३)

"यस्मात् वनात् यं वृक्षमादाय तक्षणेन द्यावापृथिव्यौ निष्पादि
तद्वनं किं नाम तथा कस्तादृशो महान् वृक्षोऽभूत्। हे मनीषिणः इद
मर्थं जिज्ञासायुक्तेन मनसा पृच्छत; किञ्चेश्वरो भुवनानि धारयन् य
स्थानमभ्यतिष्ठत् तदपि पृच्छत। (४)

---

(१)"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥"
ऋ. १. १६४. ४६

(२) किंस्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत्।
यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः

(३) विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुतविश्वतस्पा
स बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः॥

(४) एतेन सृष्टिकर्तुरद्भुतासीमशक्तिशालित्वं द्योत्यते।
किं स्विद्वन क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्।

"यो विश्वकर्मास्माकं पालयिता' अस्माकमुत्पादयिता च यश्च
वस्य जगतोऽप्युत्पादकः यो देवानां तेजःस्थानानि वेद किंबहुना यश्च
र्वाणि भूतजातानि वेत्ति, यश्च देवानां नामधेयं विहितवान्, स क इति
न्यानि भूतजातानि पृच्छति" ॥ * १०. ८२. ३.

य इमानि भूतजातानि जनितवान् हेनराः, तं विश्वकर्माणं यूयं न जा-
थ बुद्धमिति यत्सन्निहितं वः प्रतिभाति, स खलु ततो भिन्न एव
वति। सर्वे जना नीहारेण (कुहेलिकारूपेणाज्ञानेनेति भावः) प्रावृताः
न्तो यत् किञ्चिज्जल्पन्ति, केनाप्युपायेन प्राणांस्तर्पयन्ति च, वस्तु-
स्ते पारमेश्वरं तत्त्वं न किञ्चित् विचारितवन्तः" ॥ ३ ॥ +

य. खलु सृष्टिकर्त्रोक्तेषु मन्त्रेषु विश्वकर्मेत्युक्तः स एवान्यत्र (१०
१) 'हिरण्यगर्भ' इत्युक्तः एषामपि छित्रा इहोद्ध्रियन्ते। एतेषां
त्राणां देवता 'कः'। को नाम प्रजापति रिति ब्राह्मणानुसारिणः सूत्र-
थ्यकारादयो वैदिका ब्रुवन्ति। नव्यास्तु पाश्चात्याः केचित्प्रतीच्या-
हुः—एषु मन्त्रेषु सर्वत्रैव "कस्मै देवाय हविषा विधेम" इतीह
कस्मै" इति पदं न प्रजापतिवाचक-'क'-शब्दस्य रूपम्, अपितु
केनाम 'किं' शब्दस्यैव। एतस्यैवार्थस्यात्र चारुतरं युज्यमानत्वात्।

---

अत्रेदं कौतुकावहं सादृश्यं यद् ग्रीकदर्शनेषु पूर्वं मूलोपादानं
धायितुं वनार्थक एव शब्दः प्रयुक्त आसीदिति—

"It is an interesting coincidence that "wood" the
rm here used was regularly employed in Greek phi-
sophy to express original matter (húté)."

Macdonell's Sanskrit Literature p. 134.

* यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तं संप्रश्नं भुवना यान्त्यन्या ॥
ऋ. १०. ८२. ३.

+ न तं विदाथ य इमा जजानान्यत् युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

अतः किंशब्दवाच्योऽर्थ एवात्र देवता यत्स्तूयते सा देवतेति न्यायात् ततश्च को नाम देवोऽर्चनीय इति प्रश्नस्य यावत्सम्भाव्यं समाधानं कृतमिह ऋषिभिरिति। ते खलु मन्त्रार्था यथा—

"कं देवं वयं हविषा परिचरेम? यस्य प्रभावाज्जना आत्मलाभमधिगतवन्तः, यो जनानां बलदाता, यस्याज्ञां विश्वे प्राणिनो देवाश्चोपासते, अमृतत्वं यं छायावदनुवर्त्तते मृत्युश्च यस्याधीनस्तिष्ठति" ॥ १

"कं देवं हविषा परिचरेम?—यो हि महत्त्वेन प्रश्वसतः अक्षिपक्ष्मसञ्चालनं कुर्वतश्च जंगमस्य प्राणिजातस्याद्वितीयो राजा भवति, यश्च द्विपदस्य मनुष्यस्य चतुस्पदस्य गवादेश्चेशो भवति" ॥ २

"कं देवं हविषा परिचरेम?—हिमवत्प्रभृतय इमे दृश्यमानाः सर्वे पर्वताः नदीभिः सह सर्वे समुद्राश्च यस्यैश्वर्यमिति सृष्टितत्त्वविद आहुः प्राच्यादयो दिशो विदिशश्च यस्य बाहुस्वरूपाः" ॥ ३

"कं देवं हविषा परिचरेम? येन समुन्नता द्यौः पृथिवी च स्थिरीकृते, स्वर्गश्च येन स्तब्धीकृतो—यथा नाधः पतति तथोपरि स्थापितः आदित्यश्च येन तथैव स्थापितः, यश्चान्तरीक्षे सलिलस्य निर्माता" ॥ ४

सत आहोस्विदसतः सदुत्पद्यत इति दर्शनेषु महान् विवादो दृश्यते उपनिषत्स्वपि तद्विचारस्य नाल्पः प्रचारः। एतन्मूलकेषु मन्त्रेष्वपि न खलु न तत्सूत्रमुपलभ्यते। तत्र देवानामुत्पत्तिकथनावकाशे, (ऋग्वेद १०. ३२. २) असतः सद्जायतेति दृश्यते यथा—

"यथा कर्मारः प्रज्वलनार्थमग्निं भस्त्रयोपधमति, तथा ब्रह्मणस्पति

---

१ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
२ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
३ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।
यस्येमा प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥
४ येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः।
यो अन्तरीक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥

देवानामादिसृष्टौ तेषां जन्मानि सम्पादितवान्; तदा असतः सद्-जायतेति"। १

एवं तत्रैव [२]—

"देवानामादिसृष्टिसमये असतः सदजायत, तदनु दिशोऽजायन्त, तदनु वृक्षा उदपद्यन्तेति"। २

असतः सदुत्पत्तिरनयापि श्रुत्या समर्थ्यते— "असद्वा इदमग्र आसीत्, ततः सदजायतेति"। दूषिता पुनरियमेतया छान्दोग्यश्रुत्या [ ६।२ ]

"कथमसतः सज्जायते"त्युपक्रम्य सदेव सोम्येदमग्र आसीदित्यादिकया वेदान्तिभिः सांख्यैश्च महानिह शास्त्रार्थ आरभ्यत इति ज्ञायत एव दार्शनिकैः पाठकैः। विस्तरभिया नेह वयं तदुद्धर्तुं प्रभवामः।

वक्ष्यमाणं सृष्टिसूक्तं नितान्तं हृदयंगममिति सहृदयेभ्योऽनुपायनीकृत्य विरन्तुं न युक्तमिति तत् क्रियते। सृष्टितत्वमीमांसायामिदं सूत्रं परमवलम्बनमस्माकं दार्शनिकानाम्। सृष्टिपूर्वावस्था च कथमतिमनोज्ञं वर्णिता वैदिकर्षिभिरिति द्रष्टव्यमत्र। यच्चेह तत्त्वमस्फुटमिव देव परस्तात् उपनिषत्सु, ततश्च दर्शननिबन्धेषु क्रमेण स्फुटतरं स्फुटतमञ्च संवृत्तम्। इदं तदास्वाद्यतां श्रीमद्भिः—

तदानीं सृष्टेः पूर्वं प्रलयावस्थायाम् 'असत्' नासीत्, 'सदपि' नासीत्; पृथिव्यादयो लोका नासन्, अन्तरीक्षमपि नासीत्, अन्तरीक्षतोऽप्युपरिवर्त्तमाना द्युलोकप्रभृतयोऽपि नासन्। [अथवा वायुनां-

---

१ ब्रह्मणस्पतिरेता सं कर्मार इवाधमत्।
देवानां पूर्व्ये युगेऽसतः सदजायत॥

२ देवानां युगे प्रथमेऽसतः सदजायत।
तदाशा अन्वजायन्त तदुत्तानपदस्परि॥

अयं चान्य आथर्वणो मन्त्रस्तुलनीयः—

असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितम्।
भूतं ह भव्य आहितं भव्यं भूते प्रतिष्ठितं तवेद
विष्णो बहूनि वीर्याणि॥ अथर्ववेद १.३का. १अ. १सू।

सीत्, तदुपरिवर्त्तमानमन्तरीक्षमपि नासीत्] किं नामावरकमासीत्? कुत्र वा कस्य वा कृते तदासीत्? गहनगम्भीरं सलिलं किं तदानीमासीत्? (१)

तदानीं मृत्युर्नासीत्, अमरणमपि नासीत् दिनस्य निशायाश्च ज्ञानं नासीत् [सूर्याचन्द्रमसोरेवाभावादिति भावः]; तदानीं केवलमेकं तत् (परमात्मरूपं) वस्तु स्वात्ममात्रमाश्रित्य प्राणितवत्; तस्मात्परं नान्यत् किञ्चिदासीत्। (२)

तदानीं तम एव तमसा समाच्छन्नमासीत् सर्वमपीदं तस्मिन् काले सलिलमयम् अप्रज्ञायमानं चासीत्। यत्पूर्वं तुच्छेन [असता अज्ञानेन वा] वस्तुना अपिहितमासीत्, तपसः प्रभावेण तदेवैकम् आयत। (३)

सृष्टेः प्रागवस्थायाम् ईश्वरस्य मनसि [जगत्सृष्टिविषयकः] कामोऽजायत, यो हि सृष्टेर्बीजभूतोऽभूत्। अतिक्रान्तदर्शिनः कवयो हृदि निरुद्धया बुद्ध्या सतो वस्तुनो हेतुमसति वस्तुनि विज्ञातवन्तः।(४

इयं विविधा सृष्टिः कस्मादुपादानकारणात् कस्माच्च निमित्तकारणात् समन्ताज्जातेत्युभयं कः सम्यग्वेद, को वा विस्तरेण वक्तुं शक्नुयात्। देवता अपि अस्या भूतभौतिकसृष्टेरर्वाचीनाः। तथाविधास्ता कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः? यतो जगदिदं जातं; तत्कः जानाति? (५)

---

(१) नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्।
किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥

(२) न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥

(३) तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदं।
तुच्छेनाभ्वपिहितं यदासीत् तपसस्तन्महिनाजायतैकं॥

(४) कामस्तदग्रे समवर्त्ताधि मनसो रेतः प्रथमं यदासीत्।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥

(५) को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव॥

यत इयं सृष्टिर्जाता यदि वा केनापीयं कृता नैव वेति स एवैको
ानीयात् य अस्या अध्यक्षः परमे व्योमन्यवतिष्ठते, अथवा सोऽपि न
ानीयात्। ६

श्रीम्याकडोनेल साहिबः अस्य सूक्तस्य सौन्दर्य्यमुपवर्ण्यापि किञ्चि-
द् आत्मनो मतं प्रकाशितवान्, यद्धि अस्माकं दार्शनिकैरवश्यं द्रष्ट-
म। तद्यथा— "किन्त्वत्रापि भारतीयदर्शनानां केषाञ्चित्प्रधानभूता-
दोषाणां परिचयो लभ्यते, यथा स्पष्टत्वस्य संगतेश्चाभाव इशब्दमात्रे
हेतुप्रदर्शनस्य निर्भरत्वं शब्दतः केवलंहेतुः प्रदर्श्यते, नत्वर्थतोऽपी-
 भावः।" *

श्रीमान् म्याकडोनेलः संस्कृतज्ञ इति नास्त्यस्माकं लेशतोऽपि सन्दे-
ः। परन्त्वस्य सेयमुक्तिः सत्येति नास्माकं प्रतिभाति। न चात्र तेन
ञ्चित्प्रमाणमुपन्यस्तम्। निष्प्रमाणकं च वचनं कथमुपादेयं परी-
कैः? अस्माकं दार्शनिकाः पुनः किं मन्यन्ते?

विधुशेखरशर्म्मा

---

## काव्यतत्त्वावली।

इदानीमभिज्ञानशकुन्तलस्य उत्तरचरितस्य च सामान्यतो गुण-
षौ कथयामः।

अभिज्ञानशकुन्तलस्य भाषा माधुर्यगुणसम्पन्ना, तादृशी भाषैव
टकादेरनुकूला विप्रलम्भकरुणरसयोरप्यनुगुणा भवति। यथा उक्तं

---

"इयं विसृष्टि र्यत आबभूव यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन् सोंग वेद यदि वा न वेद॥" ६

* "But evenhere may be traced some of main defects
Indian philosophy—lack of clearness and consistency
th tendency to make reasoning depend on mere
rks." SANSKRIT LITERATURE, p. 137.

काव्यप्रकाशे "आह्लादकत्वं माधुर्यं श्रृंगारे द्रुतिकारणम् । करुणे विप्रलम्भेतच्छान्तेचातिशयान्वितम्" "इति ८म उल्लासः । २०।२१ कारिका एवं साहित्यदर्पणेऽपि "चित्तद्रवीभावमयोल्हादो माधुर्यमुच्यते सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥" इति ८मः परिच्छेदे ६०८।६०९ कारिका ॥

माधुर्यगुणव्यक्तौ च—

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना ।
रणौ लघू च तदव्यक्तौ वर्णाः कारणतांगताः ।
अवृत्तिरल्पवृत्तिर्वा मधुरारचना तथा ॥ इति ॥

यथा अभिज्ञानशकुन्तले—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिवशल्यं दहति माम् ॥

इत्यादौ सर्वत्र दीर्घसमासरहिता रचना यथा अनुतापविप्रलम्भव्यञ्जिका तथा नाटकस्यापि अनुकूला ।

उत्तरचरितस्य भाषा तु दीर्घदीर्घसमासबहुला उद्धतवर्णसंकुला चेति करुणरसस्य विप्रलम्भरसस्य च प्रतिकूला नाटकादेरपि प्रतिकूला उक्तं हि साहित्यदर्पणे ९म परिच्छेदस्यान्ते "क्वचित्तु वक्त्राद्यौचित्यादन्यथारचनादयः । प्रबन्धौचित्याद्यथा नाटकादौ रौद्रेऽपि अभिनयप्रतिकूलत्वेन न दीर्घसमासादयः" इति ।

यदा रौद्रादौ रसेऽपि दीर्घसमासादयो निषिद्धास्तदा विप्रलम्भकरुणादौ तु अत्यन्तमनुचिता एव ते ॥ इत्यनौचित्यं नाम रसस्य दोषोऽयम् ॥

यथा उत्तरचरिते द्वितीयांके—

"इह समदशकुन्ताक्रान्तवानीरवीरुत्-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।

फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥"

इत्यत्र समदेत्यारभ्य 'तोया' इत्यन्त एकः समासः फलेत्यारभ्य ोतस इत्यन्तोऽपरः समास इति दीर्घसमासा उद्धता वर्णाश्च । तिष्ठतु ावत् पद्ये दीर्घसमासः प्राकृतभाषायामपि दीर्घसमासो दृश्यते यथा तीये अंके सीता । "दिट्ठिआ कहं पहादचन्दमण्डला पण्डरपरि खामदुर्बलेण आआरेण निअसोम्मगम्भीराणुभावमेत्त पच्चभिजा ाज्जो एव्व अज्जउत्तो होदि' इत्यादौ । इत्थमुत्तरचरिते प्रायेण ाघेदीर्घसमासा उद्धताश्च वर्णा दृश्यन्ते इति । स नाटकस्य दोषः ।

उत्तरचरिते अर्थदोषोऽपि सामान्यत उक्तएव । उत्तरचरितस्य अ- र्ों हि प्रायेण प्रौढोक्तिसिद्धा एवेति प्रागेव उक्तम् ।

क्वचिदर्थयोर्विरोधोऽपि दृश्यते तथाहि भवभूतिना वाली नाम वा- नरराजो रावणमातामहेन माल्यवता रामस्य वधार्थमनुरुद्धः प्रेषितश्च ाली च रावणस्य मैत्रीं स्मरन् तस्या निष्क्रयार्थं रामवधं कर्तुमभ्यु जगाम । अथ प्रवृत्ते संग्रामे रामेण प्रकाशमेव एकेन शरेण निहतो ाली पपात ममार च इति ।

उत्तरचरिते पुनर्लवश्चन्द्रकेतुमुवाच यथा पञ्चमे अंके—

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते, सुन्दस्त्रीमथने- प्यकुण्ठयशसोलोके महान्तो हि ते । यानि त्रीण्यकुतोभयान्यपि पदान्या ान् खरायोधने, यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञोजनः ॥ इत्यत्र न्द्रसूनोर्वालिनो निधने यत्कौशलं प्रच्छन्नेन रामेण शरक्षेपणं तत्रापि नोऽभिज्ञ इति यदुक्तं तन्महावीरचरितस्य विरुद्धमिति पूर्वापरवि द्धोऽयमर्थः । ननु लवेन रामायणमेवाधीतमतस्तत्रोक्तं वालिवधस्य छलं लवेनोक्तमिति को दोष इति चेन्न यदाभवभूतिना धीरोदात्त ायकस्य रामस्य कपटतादोषस्पर्शशंकया तन्निराकरणाय रामायणस्य र्थोन्यथा कल्पितस्तदा उत्तरचरितेपि आत्मन उक्तिरेवानुसर्त्तव्या

नतु रामायणस्य । एवञ्चमहावीरचरितेन सह उत्तरचरितस्योक्त विरोध एवेति पर्यालोच्यतां सहृदयैः ॥

किञ्च उत्तरचरितस्य अर्थकल्पनायाम् असंगतिरपि दृश्यते तथाहि वाल्मीकेस्तपोवनं तमसानद्यास्तीरे तमसानदी च हिमवत उत्पद्य गंगायां प्रविष्टा। आत्रेयी नदी तु विन्ध्यपर्वताज्जाता दण्डकारण्यं प्रविवेश सुतरां वाल्मीकेस्तपोवनस्य समीपे आत्रेय्या नद्या गन्धोपि नास्ति परन्तु दण्डकारण्यस्य वनदेवतया वासन्त्या आत्रेयी पृष्टा—

आर्ये आत्रेयि, कुतः पुनरिहागम्यते किंप्रयोजनो दण्डकारण्योपवन प्रचारः ?

आत्रेयी। अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥

इत्युत्तरं ददौ। इयं कल्पना कथं संगच्छते यदि वस्तुतएव आत्रेयी तमसातीरस्थात् वाल्मीकितपोवनात् प्रवृत्त्य दण्डकारण्यप्रवेशमकरिष्यत् तदा 'वाल्मीकिपार्श्वादिह पर्यटामीति' उक्तिरपि समगमिष्यत वाल्मीकेस्तपोवनञ्च तमसातीरे इत्यपि उत्तरचरिते उक्तं वाल्मीकिर्हि स्नातुं तमसानदीं गच्छन् व्याधेन विद्धं क्रौञ्चं दृष्ट्वा "मा निषाद प्रतिष्ठांत्वमित्यादिना पद्येन व्याधं शशापेति। सेयमर्थस्य असंगतिरिति।

नन्विय मात्रेयी न नदीरूपा परन्तु देवतैव सुतरां दिव्यप्रभावोदृश्यायास्तस्या वाल्मीकिपार्श्वादागमने नास्त्यसंगतिरिति चेन्न नदीरूपाया आत्रेय्याएव अधिष्ठात्री देवता सेयमात्रेयी एवञ्च नदीरूपा आत्रेयी यतःप्रदेशात् यत्र जगाम तदधिष्ठात्री देव्यपि ततः प्रदेशात् तत्र गतेति कल्पनैव युक्तियुक्ता भवति न पुनः तदन्यथा कल्पनापीति विचार्यतां सुधीभिः ॥

सम्प्रति उत्तरचरितस्य अभिज्ञानशाकुन्तलस्य च वस्तु (इतिवृत्तं) क्रमेण समालोच्यते—

नाटकेषु कार्यस्य पञ्च अवस्थाः सन्ति। ताश्च आरम्भः १। यत्नः २। प्त्याशा ३। नियताप्तिः प्राप्तिनिश्चय इत्यर्थः ४। फलागमः फलो ाः ५॥ तासामवस्थानां मध्ये मुख्यफलसिद्धये यदौत्सुक्यं सा आ ाभावस्था, उक्तं हि साहित्यदर्पणे "भवेदारम्भ औत्सुक्यं यन्मुख्यफल ाद्धये" इति॥

उभयोरेव नाटकयोर्मुख्यं फलं नायकयोः पत्नीपुत्रलाभः। उत्तर- रिते नायकस्य रामस्य सीताकुशलवप्राप्तिः। अभिज्ञानशाकुन्तले च यकस्य दुष्मन्तस्य शाकुन्तलासर्वदमन (भरत) प्राप्तिः।

उत्तरचरितस्य आरम्भावस्थायामष्टावक्र ऋष्यशृंगाश्रमादागत्य शेष्ठस्य सन्देशं राममुवाच 'जामातृयज्ञेन वयं निरुद्धास्त्वंबालएवासि ाश्चराज्यम्। युक्तःप्रजानामनुरञ्जनेस्यास्तस्माद्यशो यत्परमंधनंवः॥' त॥

तत्श्रुत्वा रामः "यथासमादिशति भगवान् मैत्रावरुणिः, स्नेहं दया ौख्यं च यदिवा जानकीमपि। आराधनायलोकस्य मुंचतो नास्ति मे ा" इति यदुवाच तस्य फलं सीता निर्वासनं॥ १॥ ततः स्वच स्य चित्रदर्शनप्रसंगे जृम्भकास्त्राणि दृष्ट्वा सीतां यदुवाच "सर्वथा नीं त्वत्प्रसूतिमुपस्थास्यन्तीति" तस्य फलं कुशलवयोर्जातमात्रयो भकास्त्रलाभः॥ २॥ ततो गंगायाश्चित्रं दृष्ट्वा यदुवाच "सा त्व 'स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपराभवेति" तस्य फलं ायाः प्रसवकाले प्रसूतिधारणं समाश्वासनं रक्षा च॥ ३॥ अथ ायाः परित्यागकाले पृथिवीं यदुवाच "भगवति वसुन्धरे सुश्लाघ्यां तरमवेक्षस्व जानकी" मिति तस्य फलं सीतयाप्रसूतयोः पुत्रयोरेक य पृथिव्या धारणं प्राणपरित्यागव्यवसायात् सीताया निवारणं ४॥ इत्येते चत्वारः फलोदयेन सह आरंभावस्थायाः संबन्धाः॥ ु मुख्यफलसिद्धये औत्सुक्यं आरंभावस्थाया लक्षणमुक्तं। अत्र पुनः ालाभार्थं तत्पुत्रलाभार्थं वा औत्सुक्यं नास्त्येव प्रत्युत तद्विपरीते

सीतानिर्वासने एव निश्चयोदृश्यते निर्वासनमपि पुनः प्राप्त्याशारहि मेव यतो रामः निद्रितायाः सीतायाः पादौ शिरसिधृत्वा "अयं पश्चिः स्ते वामशिरसि पादपंकजस्पर्शः" इति रुदन्नुवाच। पश्चिम इति विः षणेन इतः पश्चात् तत्रचरणस्पर्शो न प्राप्स्यामीति सूच्यते सुतरां मुख फलसिद्धेरारंभावस्था इयं न युज्यते॥ इत्येतच्चिन्त्यम्॥

द्वितीयेचांके आत्रेय्या नद्या सह दण्डकारण्ये वनदेवताया वासन्त उक्तिप्रत्युक्तिरूपेण विष्कम्भकेण भूतवर्त्तमानभविष्यद्वृत्तान्ताः सूचित तेच रामाज्ञया लक्ष्मणेन परित्यक्ता सीता गंगायामात्मानं चिक्षेप त वान्तर्जले द्वौ पुत्रौ प्रसूतवती, तौच गंगापृथ्वीभ्यां धृतौ सीता च सः श्वासिता पाताले त्रयस्ते रक्षिताश्च। रामोऽपि अश्वमेधयज्ञाय मेध्यम मुमोच तस्य रक्षकश्च लक्ष्मणस्यपुत्र श्चन्द्रकेतुरश्वमनुसरन् परिभ्र ति। अथ रामः शम्बूकं शूद्रतापसं हन्तुं पुष्पकेण विमानेन तमन्विष्य पृथिवीं पर्यटति, शंबूकस्तु दण्डकारण्यएव तपस्यतीत्यतोरामस्य द कारण्ये पुनरागमनं संभवेदित्येतावंतो वृत्तांताः॥ अथ रामो दण्डक रण्यं प्रविश्य शंबूकं हत्वा तस्य दिव्यतां प्राप्तेन आत्मना आलप्य अगस स्य आदेशं च तन्मुखात् श्रुत्वा अगस्त्यमभिवादयितुं तदाश्रमं जगामे द्वितीयांकस्य वस्तु। अस्मिन् वस्तुनि मुख्यफलस्य सीतालाभस्य लाभस्य वा उपाये रामस्य यत्नगन्धोपि न व्यज्यते सुत नेयं यत्नावस्था; स हि प्रयत्नस्तु फलावाप्तौ व्यापारोतित्वरान्वित इति यदि च चंद्रकेतुना सहलवस्य युद्धंभविष्यति तत्र राम आगत्य कुशल पुत्रौ प्राप्स्यति इति परंपरया फलोदयेन सह संबंधो वर्त्तते तथापि पु लाभाय रामस्य नासीत् कश्चित् यत्नः। पुत्रलाभस्तु इच्छांविनैव का तालीयन्यायेन दैवात् सम्पन्नः॥ रामस्य दण्डकारण्यगमनेन स फलोदयस्य पुत्रलाभस्य अंगांगिभावश्च न प्रतीयते। द्वितीयतृतीययो योर्वस्तुभिः सह उपसंहारसंधेः कश्चित् संबंधोपि कविना न दर्शि येन प्राप्त्याशावस्था ज्ञायेत उक्तं हि उपायापायशंकाभ्यां प्राप्त्याशाप्रा संभवः। इति। रामस्य सीताप्राप्तौ पुत्रप्राप्तौ वा कापि नासीदाशः रामो हि अपुनर्ग्रहणाय सीतां निरवासयत्। अतएव तृतीयांके

के "कथं तूष्णीं सहथ्यो निरवधि रिदानींतु विरहः"। इति विलाप
ताया अपि तेनैव विलापेन रामप्राप्तेराशा भग्ना। तथाहि सीता 'वहु-
णिदह्मि पूर्वविरहे। निरवहित्ति हा हदह्मि इत्युवाच।' अतः सीताया
पे प्राप्त्याशानासीदिति निश्चीयते। अपिच रामो यदि सीताप्राप्तेरा-
मकरिष्यत् तदा अश्वमेधयागार्थं सीताया हिरण्मयीं प्रतिकृतिं ना-
रेष्यत् सुतरां गर्भसंधिरपि न सुश्लिष्टः। विमर्षसंधौतु नियताप्तिरव
नियताप्तिश्च प्राप्तेर्निश्चयः। अदृश्यया सीतया रामे स्पृष्टे सति वासंतीं
ति रामेण यदुक्तं "सखि किमन्यत्। पुनरपि प्राप्ता जानकीति" तदेव
दि नियताप्तिरूपावस्था स्यात्तदा विमर्षसंधिः संगच्छते परंतु
ादेव राम उवाच "व्यक्तं नास्त्येव कथमन्यथा वासन्त्यपि न प-
त्। अपि खलु स्वप्न एष स्यात्? नचास्मि सुप्तः कुतो रामस्य निद्रा
र्थापि सएवैष भगवाननेकवारकल्पितो विप्रलंभः पुनःपुनरनुवध्नाति
म्"। इति यदुवाच तेन नियताप्तेर्विरोधो दृश्यत इति चिंत्यताम्।
च आरंभयत्नप्राप्त्याशा नियताप्तयश्चतस्र एव रामकार्यस्य अवस्था
रचरिते न सुसंगच्छंते परंतु फलयोगावस्था अतीव मनोहारिणी।
त उपसंहारसंधिरुत्तरचरितस्य मनोहरः। स हि नाटकस्य मध्ये
रेण नाटकेन अभिनीयत इति चमत्कारविशेषमावहति।

रसदोषोऽप्युत्तर चरिते दृश्यते तथाहि तृतीयांके सीताया रामस्य
पुनःपुन र्मूर्च्छा वर्णिता। प्रथमतो रामस्य कृशं पाण्डुमाकारं दृष्ट्वा
ताया मूर्च्छा, ततो रामस्य मूर्च्छा, ततो वासन्त्या मोहः। अथ
रपि रामस्य मूर्च्छा। ततश्च सीताया अपि मूर्च्छा। इति रामस्य
पुना रसस्य दीप्तिः सीतायाश्च पुनः पुना रसस्य करुणविप्रल-
स्य दीप्तिः कथिता, स एवायं रसदोषः। उक्तं हि साहित्यदर्पणे
यप्रकाशे च "अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनःपुनः॥" उदा-
ं च दर्शितं कुमारसम्भवे महाकाव्ये रतिविलापे रत्याः पुनः पुन-
कस्य दीप्तिः, तद्वदत्रापि दृश्यतां सहृदयैः।

श्रीमहेशचन्द्रशर्म्मा।

प्रश्नः । *

वर्त्तमानलोकस्थित्यर्थं धर्मसंस्कारस्य प्रयोजनमस्ति न वा ।

उत्तरम् ।

वंगवेदविद्यालयाचार्यस्य वैदिकधुरन्धरस्य पण्डितवर-
श्रीसत्यव्रतसामश्रमिमहाशयस्य ।

प्रयोजनमस्ति परमिदानीं प्रायः सर्व एव पण्डितम्मन्या, अपणि
ता न दृश्यन्ते, तथा सर्व एवोपदेशकम्मन्या उपदेश्या न दृश्यन्
एवं सर्व एव शास्तृमानिनः, शासनीया न दृश्यन्ते तत् कथंकारं सम
वेद्धर्म्मसंस्कार इत्यतोऽत्रास्माकं मौनावलम्बन मेव श्रेयः ।

---

वाराणसेय-महामहोपाध्याय-सर्वतन्त्रस्वतन्त्र-श्रीराममिश्रशास्त्रिणः-

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥

इदानीं धर्मसंस्कारोऽत्यन्तावश्यकः । इतरथा मन्दमतयो जना अ
द्यत्वे वैदिकधर्ममतिसुकरानुष्ठानमपि दुरनुष्ठानं मन्यमानास्त्यजे
रुच्छिन्द्युश्च शाश्वतिकीं भारतेऽत्र चलितसनातनधर्ममर्यादा मधोऽधं
गच्छेयुश्च नरकेषु । किञ्च कृश्चनमतप्रवर्तका धर्मच्छिद्रमितस्तत
गवेषयन्तः स्वमतं देशे प्रवेश्य वैदिकमध्वानं भ्रंशयेयुः । ते हि नग
ग्रामोपवनखर्वटेषु अटाट्यामचरन्तो जनमानसानि वैदिकधर्माद्विमुख
यन्त उपमृद्नीयु रिमामस्मदीयां पूर्वपुरुषनिषेवितामाब्रह्मणोऽहरागं
प्रारब्धां धर्ममर्यादां कुर्य्युश्च न केवलं वर्णानां सांकर्य्यं, किन्तु सर्वथो
च्छेदम् । एवं च धर्मस्यावश्यसँस्करणीयत्वे सर्वप्रथमतो विदेशयात्रा
सँस्कारः कार्यः । इदानीन्तनाः स्वस्वधर्मं नाचरन्ति, किन्तु तत्राप
परमतमाक्षिपन्ति, तेन स्वयमाक्षेपविषयतामुपयान्ति, कदाचित्तु त

---

* वार्त्ता द्रष्टव्या ।

विवादेषु भवन्ति तादृशा दुरभियोगा येषां शमनं राजधर्माधिकर-भवति, न ततः प्रागिति देशे तादृशी शिक्षाप्रणाली प्रचालनीया, अयं लोकः स्वधर्मानुष्ठानपरायणः परधर्माणामनाक्षेपकश्च भवेत् ।तः शिक्षाप्रभावतश्च । ततः परं सामाजिकव्यवहारमार्गशोध-ावश्यकं, यथा यज्ञोपवीतविवाहश्राद्धादिक्रियासु लोका वृथा-कुर्वन्ति शास्त्रीयावश्यकद्रव्यव्ययस्थानेषु च संकुचन्ति। मूर्खैः पुरोधोभिरुपरुध्यन्ते कर्माणि, एवं च बहुव्ययं कुर्वाणा, लोकेषु ां कामयमाना: पारलौकिकसुखभ्रष्टा इह लोके ऋणभारग्रहि-वन्तीति अत्रापि विषये धर्मसंशोधनमुचितमावश्यकं च।

---

## वंगेषु रंगपुरवास्तव्यस्य महामहोपाध्याय पंडितराज श्रीयादवेश्वरतर्करत्नमहाशयस्य—

वेधिना विनिषिद्धो लोकस्थितये अनुष्ठीयतां तावद्व्यवहारो नोच्चे-ष्ठीयतां लोकस्थित्यर्थमपीति। समुद्रयात्रायां म्लेच्छदेशगमने वा ुतिः श्रूयते चेत्—श्रुतेः स्मृतेः तन्त्रात् पुराणाद्वा, सर्वथा परि-र्यं कर्त्तव्यकर्मनिरतैरपि तत्तत्कर्म। बृहन्नारदीयपुराणवचने यत् ते समुद्रयात्रानिषेधः, स खलु न तावत् समुद्रेण यात्रां ज्ञापयति-ाति तु मरणार्थं समुद्रप्रवेशं—जलप्रवेशमिति, सकर्मकगमनार्थ-'धातोरकर्मकत्वविवक्षायां मानाभावात्। वचनेऽस्मिन्नादित्यपु-ाचनान्तरे च भृग्वग्न्यादिमरणनिषेधो ब्राह्मणानां मरणान्तिकप्रा-ानिषेधोऽपि श्रूयते, तत्र तत्र तत्तद्दर्शनेन तथा कल्पनीयं; वाक्य-या। "समुद्रयात्रा"पदमप्युपलक्षयत्यग्निप्रवेशं भृगुपतनादिक-मन्यामहे 'होलाकाधिकरण'न्यायेन। यत्तु 'समुद्रयायिनः' हव्य-नर्हणीयत्वमुक्तं साक्षात् श्रुत्यर्थमवगच्छता भगवता मनुना मनु-ायास्तृतीयाध्याये "समुद्रे यो वहित्रादिना द्वीपान्तरं गच्छती"-म्यते च कुल्लूकभट्टव्याख्यानं, तदपि प्रख्यातनामधेयानां प्रथित-

यशसां प्राचीनपण्डितानां मतम् अतस्समीचीनमिदमित्यखण्डनीय
र्वाचीनैः पराचीनैरपरिचितशास्त्रार्थैरस्माभिः । तथापि क्षत्रियाण
श्यानां शूद्राणां च न निषिध्यते तेन वचनेन, तेन व्याख्यानेन च स
द्रयायित्वं । ये खलु दैवे पैत्रे च कर्मण्यर्हणार्हा भवन्ति तेषामेव
लं निषिध्यते तथात्वं ब्राह्मणानां । येत्वापदि वैश्यवृत्तिमनुसरन्त
तिष्ठन्ति च, तेषामपि न निषिध्यते ब्राह्मणानां । पतितानामादौ ह
कव्यानर्हणयित्वमुल्लिख्य 'समुद्रयायि' पदस्य पुनरुल्लेखनादना
समुद्रयायिनां ब्राह्मणानां युद्धाचार्याणां वशिष्ठ-द्रोण-कृपाणामिव
कित्सकानामिव च पतितत्वमपि नापतितम्, उपपादितमुपपातकमि
इतः कान्याह्यस्ति ब्राह्मणानामापत्; यया किल कलेर्घोरेऽस्मिन् ग
केवलमुदरभृत्यर्थं भृत्यतारूपमवलम्बमाणैः स्वेच्छाचारैर्म्लेच्छचर
पानचुम्बनचतुरैश्चतुर्णां वर्णानामाराध्यैरपि म्लेच्छभाषाध्यायि
प्रोज्ज्वलज्वलनप्रतिमभृगुप्रभृतिमहर्षिमहसः उद्भूतैरपि ततो ना
काचित्प्रपद्यते पद्या ! महापद्यापातितैः को नामोपायः अपायमुखे
प्रधावद्भिस्तैरेव ब्राह्मणैः स्वसमुद्धरणाय समुद्रेण पथा द्वीपान्तरग
नमन्तरेण । 'द्वीपान्तरगमन' मिति फलमुल्लिख्य " फलनिरपेक्षा
त्तिः " कथं घटत इति स्वयमेव विवेद सुगृहीतनामा कुल्लूकभट्टः ।

"फलनिरपेक्षाप्रवृत्तिस्ताच्छिल्यमिति" वैयाकरणानां परिभा
म्लेच्छदेश-गमने तूपपातकसमुत्पत्ति, नैच समुत्पत्तिर्भवत्यतिप
कस्य, महापातकस्य, तथानुपातकस्य वा; यस्य यस्य सं
पातित्यं जनयति जनस्य । तदेव समर्थयते " म्लेच्छदेशगमना
भिर्निमित्तै " रित्यादि श्राद्धतत्त्वीयालिखनमपि स्मार्त्तमहाम
पाध्यायस्य रघुनन्दनभट्टाचार्य्यस्य । भुवोमण्डनभूतानामिंलंडानां,
तपुरुषप्रोथितकेतनानां प्राङ्नागराजनिकेतनानामामेरिकाणां, तथ
तिसोपानानां जापानानांसंसर्गः साधयत्यैहिकवर्गद्वयस्य सर्गं । न स
प्रजायन्ते प्रजासमृद्धयस्तत् तत्संबंधं विना वृद्धीभूताः । ननु विश्व
वेलाभूमिषु भवति प्रत्यूहां स्तरंगभंगानुलंघ्य पोतानामपूतानां स्वच्छ

ारिणां स्वेच्छाहारविहाराणां म्लेच्छानां संसर्गेण । स्वच्छचरिता र्या अप्यनार्य्यचरिताः स्वच्छन्दचारिणोभवन्ति, म्लेच्छाचारा भव- त, विचारशून्याभवन्ति पोतमारुह्य । न तत्र विद्यते म्लेच्छपक्वान्न ना कोऽप्याहारः । तेषु तेषु देशेषु विद्याव्यपदेशेषु गच्छन्तो भुञ्जते तु स्वच्छन्दमेव म्लेच्छछन्दानुवर्त्तिनो म्लेच्छान्नं तेषां स्वदेशमागता- कृतप्रायश्चित्तानां पूतचित्तानां ब्राह्मणादीनां व्यवहार्य्यत्वं भवति ति जिज्ञासायामुत्तरयति सन्देहाकुलमुत्तरं "प्रायश्चित्तैरपैत्येनो ज्ञानकृतंभवेत्। कामतो व्यवहार्य्यास्तु वचनादिह जायते" इति ज्ञवल्क्यवचनं । अप्रतिहतशासनोरघुनन्दनः शूलपाणिरिव ज्ञानतो ापातकमनुतिष्ठता तत्क्षयकामेन कृतमपि प्रायश्चित्तं न तावद- वहार्य्यत्वमानयति, प्रापसारयति केवलं तस्य नरस्य नरकेऽवतारण- त्यभिप्रायमुररीकृत्य याज्ञवल्क्यवचनस्थ "कामतोऽव्यवहार्य्य" इत्यत्र ाकारस्य सत्तामाचख्ये । न तथा चख्यिरे प्रख्याततनामानः प्रांचः चितचरणा जिकनभवदेवभट्टादयः । तेषां मते तु कृतप्रायश्चित्त आर्य- य्यैचार्य्यैव्यवहार्य्यो भवति, न प्रभवति तु नरकेऽवतारणं वारयि- ात्मनः सः । शूलपाणिरघुनन्दनकृतसिद्धान्तः सिद्धस्य साधयति ामुनेर्योगीन्द्रस्य याज्ञवल्क्यस्य वल्कलावृतत्वं प्रहेलिकायाइव नस्य । ऋषीणामाचार्याणां च नेषा रीतिः। रीतिरेषा ऋषीणामस्तु नवा यवचनसंवादेन शूलपाणिरघुनन्दनसिद्धान्तः, सुसिद्धोदृढभूमिः प्रसिद्धविद्याधुरन्धरैर्धराधन्यैर्मान्यै विद्वद्भिरनुमोदितः प्रतिभाति ।

"नास्यास्मिन् लोके प्रत्यासत्तिर्विद्यते कल्मषन्तु निहन्य ते" ।

इति मिताक्षराधृतापस्तम्बवचनन्तदव्यवहारनिरोधकस्तम्भः ॥

"शरणागतबालस्त्री हिंसकान् संवसेन्नतु ।
चीर्णव्रतानपि सदा कृतघ्नसहितानिमानिति" ॥

ते याज्ञवल्क्यवचनान्तरमपि व्याख्यापयति "कामतो व्य- ार्य्यस्त्वि" त्यंशं तस्य याज्ञवल्क्यवचनस्य । न केवलमयं ऽपाणि-रघुनन्दन-मतसिद्धः सिद्धान्तः, संस्कर्त्ता बौद्धसृष्टाचार

संसृष्टवैदिकाचाराणां, परिष्कर्त्ता कुतर्कजालावद्धशास्त्रपद्धतीन
माविष्कर्त्ता विवर्त्तवादानां, कर्त्ता वेदान्तभाष्याणां, त्रयीत्रिधारा
वावतारः शिवावतारस्तारको नराणां नरकेभ्यः, सर्वगुरुः सर्वदर्शी
ब्रह्मसुखस्पर्शी, विद्यामृतवर्षी, बौद्धनिग्रहकारी, ग्रहपतिरिव देदीप्य
मानोबहुमानस्तत्रभवान् भगवान् शंकराचार्योऽपि तमेव सिद्धान्तमुप
निनाय, नायमन्यविधविधानमवदधे, नायमभिदधे न तथादध्यौ च
वेदान्तदर्शनस्य तृतीयाध्यायस्य "वहिस्तूभयथापि स्मृतेराचाराच्चे
ति" त्रिचत्वारिंशत्तमसूत्रस्य व्याख्यानावसरे "शिष्टैस्तेवहिः कर्त्तव्याः"

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत् स आत्महा ॥" इति
"आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् ।
उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत् ॥"

इति निन्दाशयस्मृतिभ्यः शिष्टाचाराच्च । नहि यज्ञाध्ययनविवाहादीनि
तैः सहचरन्ति शिष्टाः । लिखितमिति तेन भाष्यकारेण षण्णां दर्शनान
प्रामाणिकटीकाकारो महामहोपाध्यायो भूबृहस्पतिर्वाचस्पतिमिश्रोऽपि
महामतिर्भामत्यां तदेव मतं भाष्यव्याख्याव्याजेन व्याजहार "निषिद्ध
कर्म्मानुष्ठानजन्यमेनो लोकद्वयेप्यशुद्धिमापादयति द्वैधं । कस्यचिदेनसो
लोकद्वयेप्यशुद्धिरपनीयते प्रायश्चित्तैरेनोनिर्वहणं कुर्वाणैः कस्यचित्
परलोकाशुद्धिमात्रमपनीयते प्रायश्चित्तैरेनो निर्वहणं कुर्वाणैः इह लोके
शुद्धिरस्यैनसापादिता न शक्यापनेतुं यथा स्त्रीवालघातिनां यथाह
"विशुद्धानपि धर्मतो न सम्पिबेदिति"। तथाच "प्रायश्चित्तैरपैत्येनो
यदज्ञानकृतं भवेदिति"। कामतः कृतमपि, वालघ्नादिस्तु कृतनिर्णेजनो
ऽपि वचनादव्यवहार्य्य इह लोके जायते । वचनञ्च "वालघ्नांश्चे
त्यादि । तस्मात् सर्वमवदातम् ॥ ये खल्ववदातचरिता अपि पाश्चात्य
विद्याविशारदास्तस्य वचनस्य रघुनन्दनकृतव्याख्यानं प्रपश्यन्तः सन्तः
क्रोधकषायितविलोचनाः शास्त्रालोचनपराङ्मुखाः गर्हामाविष्कुर्वन्त
र्हणार्हं रघुनन्दनं प्रति, तेषामेव सन्तोषमुत्पादयितुमाचार्यस्य मिश्रस्य

सन्दर्भः प्रदर्शितोऽस्माभिः । क्रियेत चेद्वचनस्यान्यथा व्याख्यानं
ष्ठिना तथा राजयक्ष्मरोगग्रस्तेन च कृतप्रायश्चित्तेन प्रसज्येत ताव
गिणां तथाविध-व्यवहारः । उच्येत चेदस्तु तेषां व्यवहार्यत्वं,
शास्त्रमायुर्वेदस्तु तत्र वाधामापादयति । कुष्ठिनां यक्ष्मिणामव्य-
ार्य्यत्वे सुतरामेव साक्षादतिपातकं वा, महापातकं वा, तथानुपातकं
कुर्वतामप्यव्यवहार्यत्वं न निवार्यते, स्मर्यते तत्र विषमाशिष्टिदोष
द्राव इति । ये खलु धनिनो युवानो यौवनोद्दामोत्साहसिका आत्म-
ञ्चित-पितृसञ्चितधनराशिगुतसादयन्त्यदम्यवासनावशेन, ये वान्ये-
वंशधराणां धराधौरेयाणां तथातथाचरणं विलोकयन्तोऽपि दृढ-
हमञ्जूषासु सुदृढकपाटवद्धासु रक्षन्ति वक्षःशोणितानीव धनराशीन्
वा राजानः श्वेतवपुषां राजपुरुषाणां सेवायामेव व्यापृता अहर्निश-
स्रं सहस्रं सहस्रमर्थराशीनां विनिक्षिपन्ति तेषामुपानत्समीपे ते ते
लिभि दैन्यशृङ्खलितैरस्माभिरश्रुनेत्रैर्याच्यन्ते, महामहिमानो मह-
चरिताः श्रीमन्तो धनवन्तोऽत्रभवन्तो भवन्तो दयापरवशेन श्रीम-
ापेक्षिणां भारतवर्षाणां प्रवर्षणेन केषाञ्चिद्द्रविणानां स्थितिरूपा
तिरूपामुपकार्तिं प्रकुर्वन्तु ; येन तावत् जयपुरराजइव स्वच्छन्दमा-
ारेण पोतमारुह्य समुद्रमुत्तीर्य म्लेच्छभूमिषु विचरन्तु पार्थिव-
ाभ्यासनिरताश्चत्वारो वर्णाः, आचरन्तु च भारतभुवि भूयोऽव-
ि देशहितव्रता देशहितव्रतानि । प्रथमप्रश्नस्योत्तरमिति लोकोत्तर-
रितानां शंकरवाचस्पतिशूलपाणिरघुनन्दनप्रभृतीनां प्रामाणिका-
संदर्भेण दर्भजलप्रोक्षितमिव प्रेक्षावद्भिः पवित्रतममुत्प्रेक्ष्यत इति ॥

---

## जयपुराधीश्वर-सभास्तारस्य परमपण्डितस्य श्रीमधुसूदनशर्मणः—

अस्ति प्रयोजनमधिकतरं धर्मसंस्कारस्य । यावता धर्मसंस्कारो
स्याश्च तावदस्माकमभ्युदयेन योगः सम्भाव्यते । संस्कृतस्यैव धर्म-

स्याभ्युदयसिद्धिं प्रति साधनतायाः साधनीयत्वात् । अन्यथा कारण सत्त्वे कार्य्यावश्यम्भावनैयत्यादिदानीन्तनाः सर्वेऽपि धार्मिकाः श्रेय सैव सर्वथा युज्येरन् । किन्तु तद्विपर्य्ययेणेदानीं "यतोऽभ्युदयनिःश्रे यससिद्धिः स धर्म" इति स्मृत्याभ्युदयसिद्धिं प्रत्यसाधारणकारण त्वेन प्रतिपादितस्य धर्मस्य भूयसानुष्ठानेपि भूयसा कृच्छ्रेणैव युक्त दृश्यते । तस्मात् व्याभिचारदर्शनाद्धर्मस्याभ्युदयकारणत्वं मा व्याह न्यतामित्यवश्यं संस्कारविशेषसंस्कृतस्यैव धर्मस्याभ्युदयसाधनत्वं वाच्यम् । न चैतावता पारत्रिकाभ्युदयं प्रत्येवास्य धर्मस्य कारणत्व मस्तीति भ्रमितव्यम् । ऐहिकयावदभ्युदयार्थवादेन प्रवर्तमानानाम स्माकीनधर्मविधीनां सर्वथा प्रत्यक्षविरुद्धाभ्युदयं प्रत्येव कारणत्वप्र तिपत्तेरश्रद्धेयत्वात् । तस्मान्मन्यामहे—संस्कारसंस्कृता धर्म्मा ऐहि कामुष्मिकसर्वविधाभ्युदयसंसाधनाः सन्ति, असंस्कृताः पुनरिमे प्राये कालक्षेपणमात्रफला अनर्थायैव प्रभवन्तीत्यतोऽस्माकमभ्युदयसिद्ध धर्मसंस्कारः परमावश्यकः प्रतिभाति । स च संस्कारः कीदृशोऽपे क्ष्यते इति चेत्तत्र ब्रूमः । द्विविधः खलु संस्कारोपेक्ष्यते दोषनिरासश्च सहकारिसंपत्तिश्चेति । तथाहि—वर्तमानावस्थायामस्मिन् धर्मस्वरू तदनुष्ठानेऽपि वा विद्यते कश्चन दोषसंबन्धः सहकारिन्यूनता चेत्य एव कारणतावच्छेदकरूपालाभादभ्युदयानुत्पत्तिरुपपद्यते । तत्रानुष्ठा तावद्देशकालद्रव्यपात्रविधिक्रमादिनियमशैथिल्यं विधर्मिसमुत्थापि तकुतर्कानिस्ताराच्छ्रद्धोत्सादश्च भूयान् दोषः प्रतीयते धर्मस्वरूपे धर्मध्वजिभिर्धनगृध्नुभिर्मूर्खतमैः पौरोहित्याद्यधिकारपदारूढैर्ब्राह्मणा भासैः प्रकल्पितप्रवेशितकतिपयासारभागत्वं महान् दोषः । इमे दोषा धर्मेणाभ्युदये जनयितव्ये प्रतिबन्धकाः परिदृश्यन्ते । एवमे द्वे खलु धर्मस्य सहकारिण्यौ भवतो विद्या च नीतिश्चेति ।

यथाहि—'किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति संचिन्त्य मेधावी कर्म कुर्वीत वा न वा' ॥

इत्येवं लौकिके कर्मणि कार्य्यकारणविद्योपयोगस्तथैव खलु नित्या

ऽपि धर्मे विद्याया भूयांसमुपयोगं पश्यन्ति । तथाच श्रूयते—'नाना विद्या चा विद्या च, यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव र्य्यवत्तरं भवतीति'। वेदाद्धर्मो हि निर्बभाविति स्मरतामपि विद्याया-त्र पक्षपातः नीतिविदोऽप्याहुः ।

'ज्ञात्वा कर्माणि कुर्वीत ना ज्ञात्वा किञ्चिदाचरेत् ।
अज्ञानेन प्रवृत्तानां स्खलनं स्यात् पदेपदे' ॥ इति ॥

स्माद् विद्यासहयोगस्य कुतर्कादिप्रतिबन्धकानुत्थानाय तन्निरासाय ावश्यकत्वं प्रतीयते। एवं धर्मस्वरूपसंसिद्धयै धर्मनीतिर्नाम काचित् ावस्थापि नितरामपेक्ष्यते। अन्यथा तत्तदधिकारिभेदभिन्नानामनेक-पाणां धर्मावान्तरभेदानां व्यवहारसांकर्य्याद्धर्ममर्य्यादा व्युच्छिद्ये-व । तस्मादधर्मे प्रवृत्तये प्ररोचना,मधर्माच्च निवृत्तये द्वेषं, मर्य्यादानि-प्रभंगदोषे शासनभयं च लोकसमाजे समुत्पादयितुं निग्रहानुग्रहा-प्रक्रियाविशेषरूपाया राजनीतेरप्यावश्यकत्वं प्रतीयते । तादृशानी-र्मे संग्रहाभिप्रायेणैव स्मरन्त्याचार्य्याः—'धर्मो राजकृतश्च यः' इति । इत्थं विद्यया व्यवस्थितप्रक्रियया च संसाधितात् प्रतिबन्धकासह-ाद्धर्मादवश्यमभ्युदयोत्पत्तिर्भवतीति सिद्धान्तः । तथा च धर्मे यफलसंसिद्ध्यै विद्यानीत्योः सहयोगसाधनं निरुक्तदोषनिरासश्चेति विधो धर्मसंस्कारो नितान्तमुपयुज्यते इति पश्यामः ॥

---

"विज्ञानचिन्तामणि"-सम्पादकस्य पण्डितवरस्य श्रीमतः
पु० नीलकण्ठशर्मणः—

धर्म एव खलु लोकस्थितेर्मुख्यं कारणम् । आर्यकुलदैव (त?) श्चायम् । सचाधुना पण्डितम्मन्यानां केषाञ्चनकृतिभिस्स्वप्रतिपाद-ात्मस्य दुर्व्याख्यानैर्वैयाकुलीमधिकमध्यगच्छदिति निर्विवादमेतत् ाधुना पुनः संस्क्रियमाणे प्रचुरप्रचारे च तस्मिन् यथावदवास्थिति-ाते लोकस्येति ।

## तथागतगुह्यकः ।

"क्षणपरिवर्तिनो हि भावा ऋते चितिशक्ते"रिति दुर्वारेण नियमेनाप रापर इव सुनिर्मलो बौद्धो धर्मोपि देशाद्देशान्तरं पर्यटन् परं पर्यव तेत। अस्य धर्मस्योत्पत्तिस्थानं साम्प्रतं "विहार" इति प्रसिद्धो मगध देशः। ततश्चायं वीरणतृणसंसृष्टानल इव पश्यत एव महता वेगे प्रसर्पन् सिंहल-ब्रह्म-श्यामादिषु दक्षिणदिग्विभागेषु नेपाल-तिब्बत चीन-जापानादिषूत्तरादिदिग्विभागेषु चोपागमत्। अस्मिश्च समं मूलत एकस्यापि तस्य स्थानभेदादिमाहिम्ना तथा परिवर्त्तनमुत्पन्नं येन तत्र तत्र विभिन्ननाम्ना व्यपदिश्यमानोऽयं विभिन्नाकारएव संवृत्त इत्थमूदीच्यवस्थितोऽयं बौद्धधर्म उदीच्यैं बौद्धैः'महायानम्' 'उत्तरया नम्' चेति अवाच्यवस्थितैस्तु 'हीनयानम्' 'दक्षिणयानम्' चेत्युच्यते महायानहीनयानयोर्मध्ये हीनयानमेव साम्प्रतमपि कथञ्चिन्मूलतोऽ विकृतं निर्मलञ्च तिष्ठति; महायानन्तु सर्वथा विकृतम् अविशुद्धतं च संवृत्तम्।

वर्त्तमान-पेशावर-(Peshawar) नामकनगरवासी 'असंगो नामकः कश्चित् सन्न्यासी नेपालादिप्रदेशेषु रक्तमांसादिभिर्देवोपहारं कुर्वाणान् पिशाचादिपूजकान् कांश्चिदसभ्यान् जनान् बौद्धधर्मग्राहणेन वस्तुतोऽभ्युदयं गमयितुमनुग्रहबुद्ध्या तदनुकूल मेव कमपि पन्थान माविश्चकार। यत्र भागतो बौद्धो धर्मो भागतश्च तेषामसभ्यानां तदा नीन्तनो धर्मः संगृहीतोऽभूत्। येन खल्वेतैः स्वकीयधर्मस्येषत्परिव र्त्तनमात्रमालोक्याभिनवधर्मस्वीकारे न किमपि वैमत्यं सम्भावितमा सीत्। असंगेन विरचितस्य तद्धर्मप्रतिपादकस्य ग्रन्थस्य नाम "यो गाचारभूमिशास्त्रम्"। असंगोऽस्मिन् ग्रन्थे तदानीं तद्देशप्रचलितबौ शास्त्रोपवर्णितस्य 'अवलोकितेश्वरस्य' भगवतो बुद्धस्य चोपासकत्वे स्त्रीपुरुषोभयरूपाःकाश्चिद्देवताः परिकल्प्य महता कौशलेन तानसभ्या विकृतरूपमपि तादृशं बौद्धधर्ममानेतुं प्राभवत् यद्यप्येते मद्यमांस

तादिभिर्देवोपहारं तत्सेवनञ्च न परित्यक्तवन्तः यद्यपि च ते
नां प्रसिद्धेनाष्टांगिकमार्गेण न कमपि सम्बन्धमधिगतवन्तः।
ान प्रचारितस्तैश्च स्वीकृतोऽयं धर्मः कालेनाभिचारिककर्मभूयि-
मायेन्द्रजालादिसंकुलेन विविधध्यानसमाधिप्रभृतिपरिपूर्णेन
ग्रक'—नाम्ना प्रसिद्धेन धर्मेण पर्यणमतेत्यैतिहासिका वदन्ति।
-तान्त्रिकयोर्धर्मयोरन्योन्यं कथं संमिश्रणं जातमिति नेपालात्
ीतानां बौद्धग्रन्थानामालोचनयैव ज्ञातुं शक्यते। केषाञ्चिदेषां
नां संक्षिप्तं विवरणं बहुपूर्वं डा० श्रीराजेन्द्रलाल मित्रेण 'नेपाला-
र संस्कृत बौद्धसाहित्यम्' इति नाम्ना (The Sanskrit Bud-
t Literature of Nepal, 1882) प्रकाशितम्। एते हि ग्रन्था
ः श्रममंगीकृत्य श्रीमता हडसन् महाशयेन (Brain Houghton
gson) नेपालात् समगृह्यन्त।* तेषु ग्रन्थेषु साम्प्रतं प्रकाशिताः
भ्यन्ते। कुतूहलिभिः पाठकैः Asiatic Society of Bengal
या परिषदा प्रकाशितं 'बृहत् स्वयम्भू पुराणम्' आनीय द्रष्टव्यं
हिन्दुपौराणिकधर्मेण बौद्धधर्मः कथं संमिलित इति। अद्यतु
कोण धर्मेणायं कथमिव संमिश्रित इति किञ्चित्प्रदर्श्यते। 'तथा-
गुह्यक' मालोचयतां जनानां नूनमिदं चेतस्येकत उदियात् यत्प-
ष्षार्थाधिगमाय नास्ति खलु लोके तत् किमपि सम्भवति, सम्भवेद्
ञ्चि उपासकेनानुष्ठातुं न शक्यमिति, अन्यतस्त्विदमपि तस्य
प्रतिभायात् यदमानुषोचितानां, कथनतोऽप्यतिभैरवं पाप्मान-

* असत्वन्धुना 'कावागुचि' नामकेन केनापि जापानीय बौद्धपुरो-
(यः खलु साम्प्रतं वाराणस्यां संस्कृतमधीते) नेपाल-तिब्बत-
षु बहुदिनंपरिभ्रम्य बहवो बौद्धग्रन्थाः स्वदेशनयनार्थं संगृहीताः-
पत्रे 'मिलिन्दपरिपृच्छा' दीनां केषांचित् पुस्तकानां नामानि
, यानि डा० राजेन्द्रलालमित्रकृतोक्तग्रन्थे न धृतानि। साम्प्रत
पुस्तकानि पारेसमुद्रं गच्छन्ति तत् तदधिगमार्थं भारतमधुना
कप्रसादमुदीक्षमाणं तिष्ठतु!

मुत्पादयतां कर्मणां यावत्कल्पनं शरीरिणा सम्भाव्येत तावत्, त
ऽप्यधिकं वा तत्र कृतमिति । तथागतगुह्यको गद्यपद्याभ्यां संस्कृ
गाथाभाषया चोपनिबद्धः,गाथाभाषा नाम संस्कृतापभ्रंशसंमिश्रणरू
या हि पद्यांशेषु ललितविस्तरे प्रागुक्तबृहत् स्वयम्भू पुराणादौ
प्रयुक्ता ।

अपरापरतन्त्रवद् ग्रन्थोऽयं 'पटल' नामधेयैरष्टादशभिः परिच्छे
विभक्तः । तत्र प्रथमे समाधिभेदाः, द्वितीये बुद्धध्यानप्रकरणं, तृत
चतुर्थे च पूजासमये विहितानि यन्त्रमण्डलादीनि पञ्चमे रहस्यपू
विधिः, अत्रैव चायं विधिरुक्तो योहि मनस्यपि कर्तुं न शक्यते—

"मातृभगिनीपुत्रीश्च कामयेद्यस्तु साधकः ।
स सिद्धिं विपुलां गच्छेन् महायानाग्रधर्मषु ॥" इति

षष्ठे तन्त्रेषु बीजमन्त्रवत् केचित् दुर्बोधा मन्त्रा उक्ताः । अ
पूजानिरतस्य साधकस्य भोज्यत्वेनेदमुक्तं, यत्रान्नभोजनं निषि
दृश्यते—

"हस्तिमांसं हयमांसं श्वानमांसं तथोत्तमम् ।
भक्षयेदाहारकृत्यर्थं नचान्नन्तु विभक्षयेत् ॥"

सप्तमपटले सिद्धिलाभोपाया वर्णिताः ।

तत्रेदमतिसुन्दरं तत्त्वं दृश्यते—

"दुष्करैर्नियमैस्तीव्रैः सेव्यमानो न सिध्यति ।
सर्वकामोपभोगैस्तु सेवयंश्चाशु सिध्यति ॥

अत्र चातिबीभत्सं किञ्चिदुपदिष्टम्—

"भगे लिंगं प्रतिष्ठाप्य बुद्धविश्वंविभावयेदिति ॥"

अष्टमे रत्नकेतुनिर्मितं भगवतः स्तोत्रं, तत्पूजाप्रकारश्च । न
वज्रधरस्य पूजाविधिः, तत्रापेक्षितयन्त्र-मन्त्र-ध्यानप्रकाराश्च । द
तथागतवज्रधरसंवादः, यत्र वज्रधरेण 'महासिद्धिप्रदायक'-ना
रहस्यमन्त्रेण सार्धं सविस्तरं पूजाविधिर्वर्णितः। एकादशे तथागते

हुँ' इत्यस्य मन्त्रस्य रहस्यं व्याख्याय तद्व्यवहाराः प्रदर्शिता द्वा:- ध्यानविशेषेष्वनुष्ठेयानां कृत्यानामुपदेशः, तदधिगमफलकीर्त्तनञ्च वेह वर्णितं यदनुसृते विहिते नियमे सर्वजातीयाः सर्व एवजनाः ायामधिक्रियन्त इति। त्रयोदशे चतुर्दशे च जपविधय उक्ता, येहि वाङ्-मनो-रागादिभिर्भिन्ना। पञ्चदशे स्त्रीसेवनेन बुद्धपूजनं स- विहितम्। तत्प्रसङ्गादेवोक्तम्—

"द्वादशाब्दिकां कन्यां चण्डालस्य महात्मनः।
सेवयेत् साधको नित्यं विजनेषु विशेषतः॥"

अस्मिन्नेव पटले कानिचिदाभिचारिकाणि ऐन्द्रजालिकानि च ने वर्णितानि। मन्त्राश्चैतेषामुक्ताः येहि सामान्येन "ॐ, हुं, हः अः" रूपाः षोडशे रहस्यपूजाविशेषाः, तेषां मन्त्र-यन्त्र-स्थानोपहारा क्ताः, यत्र करणीये होमे आहुतिद्रव्यमित्थमुक्तम्—

"विन्मूत्रमांसतैलाद्यैराहुतिं प्रतिपादयेत्॥" इति॥

अन्तिमयोस्तु पटलयोर्दुरवगाहाणां विविधानांरहस्यानां वर्णनम्, तो बुद्धस्य वज्रधरस्य वज्रपाणेः बोधिसत्त्वानांचान्योन्यं संवा- यत्र खलु प्रतिपाद्यधर्मविषयकाणि विविधानि तत्त्वान्युक्तानि; धारणा-मुद्रा-न्यास-साधनादीनि च तत्रोपदिष्टानि, स्तोत्रकवचा- च तन्त्रेष्विवोपनिबद्धानि। अत्र च तथागत गुह्यककारेण असन्तु- स्वकीयेषु प्रागुक्तेषु विधानेषु यदतिजुगुप्सनीयमुक्तं तदपि ां पाठकैः—

"समयचतुष्टयं रक्ष बुद्धज्ञानोदधिप्रभो।
विन्मूत्रं सदाभक्ष्यमिदं गुह्यं महाद्भुतम्॥
विन्मूत्रशुक्ररक्तानां जुगुप्सां नैव कारयेत्।
भक्षयेद् विधिना नित्यमिदं गुह्यं त्रिवज्रजम्॥
अन्नं वा अथवा पानं यत् किञ्चिद् भक्षयेद् व्रती।
विन्मूत्रमांसयोगेन विधिवत् परिकल्पयेत्॥" इति॥

परित्यक्तम् । केनचिद्वा " अहंवैष्णवः "अन्यान् देवान् न भजेयमिति कृत्वा परित्यक्ता पित्रादिभिः कृतापि वार्षिकी दुर्गापूजा । पितृपितामहान् अज्ञातवैष्णवधर्मान् कथयन् स प्रकारान्तरेण पूर्वपुरुषान् मूर्खान् मन्यते । अन्ये च निर्धनाजाताः व्ययाशक्त्या पूजायज्ञादिकं परित्यजन्तीति यजमाना ह्रसन्ति कं याजयित्वा पुरोधा धनमर्जयेत् । येऽपि यजन्ते तेपि पुरोधसां दक्षिणां बहु मत्वा तां ह्रसयन्ति; एकरजतस्थाने अर्द्धरजतं पादोनरजतं वा कुर्वन्ति एवंदक्षिणापि क्रमशोह्रसति । याजनस्यैतादृत्यवस्था जाता अध्यापनायाअपि अवस्था सम्यग् हीना, अल्पे एव विद्यार्थिनः संस्कृतं पठन्ति, स्वयं व्ययेन पठितुं न शक्नुवन्ति दरिद्रबालकाहि संस्कृतं पठन्ति येतु समर्थास्ते आङ्गलभाषामधीयते । सुतरां संस्कृतविद्यार्थिनः स्वव्ययेन भोक्तुमप्यसमर्थाः कथंकारं दक्षिणां दद्युः । यदिवा ददति तदा द्वित्राणि रजतान्येव इति अध्यापनाया अवस्था जाता । किं तया धनार्जनं कुर्युरध्यापकाः । प्रत्युत जीविकार्थं भैक्ष्याणि उपार्जयितुं धावन्तः क्वचिदर्द्धचन्द्रं क्वचिद्वा तिरस्कारं प्राप्नुवन्ति । पुरा दशसहस्राण्यपि विद्यार्थिनामन्नदानेन पुष्णन् मुनिः कुलपतिरासीत् । प्रतिग्रहोऽपि प्रायेण विरलएव यदि कश्चिद्ददाति तदा प्रतिग्रहःसम्भवेत् परन्तु दानमेवं कश्चिन्न करोति कथं दानपात्रं प्रतिगृह्णीयात् ।

तथाचोक्तं कविना—

दानं नो कुरुते करोति यदिवा श्रद्धाविहीनं तदा
श्रद्धाढ्यं यदिवा करोति तदपि प्रायोऽनुतापावहम् ।
दत्त्वा नाप्यनुतापमृच्छति यदि श्लाघां विधत्ते तदा
दाता दोषविनाकृतोन सुलभोयाचनालघुत्वेन किम् ॥

सुतरां दोषशून्यस्य दातुर्दुर्लभत्वात् प्रतिग्रहोऽपि दुर्लभइति । अथ वङ्गेषु धनिनोऽभ्युदयकाले अंत्येष्टिकाले वा ब्राह्मणपण्डितान् निमन्त्र्य किञ्चित् किञ्चिद्ददति परन्तु तद्दानमपि पूर्वापेक्षया अल्पतरं जातं क्रमेणाल्पतममपि भवेदिति शङ्कामहे वयम् । तथापि पुरा नवद्वी-

वाध्यापकानां विसर्जनं द्वित्रशतान्यासीत् इदानीं तु तत्र पञ्चाशदेव प्रभूतं विसर्जनं मन्यन्ते दातारः । अपिच पूर्वं यावन्तो ब्राह्मणपण्डिता निमन्त्रिता अभवन् सम्प्रति तावता मर्द्धेऽपि निमन्त्रिता न भवन्तीति कष्टः खलु प्रतिग्रहः । इत्थं पण्डितानां जीविकाकष्टं विलोक्य विद्यार्थिनः संस्कृताध्ययनमवज्ञाय आङ्गलीविद्यामधीयतइति । यद्यपीदानीमनेके धनिनः संस्कृतविद्यार्थिनां भोजनादीनि दत्त्वा, अध्यापकेभ्यश्च वृत्तिं दत्त्वा विद्यालयांश्च संस्थाप्य छात्रानध्यापयन्ति तथापि पण्डिता भूत्वा ते किंकुर्वन्तु इति कोऽपि न भावयति । तदहं मन्ये यदि पण्डितानां कश्चित् द्रव्यार्जनोपायो जायते तदा वहवएव छात्राः संस्कृतं पठेयुरिति । स चोपायः पण्डितानां वृत्तिशालिनि कस्मिंश्चित्कर्मणि नियोजनमेव । पुरा हि हलायुधभट्टादयः पण्डिताः केचन सान्धिविग्रहिकाः केचन गणनाध्यक्षाः अन्येचान्यस्मिन्नुन्नतपदेऽधिकृता आसन्निति न तादृशे कर्मणि दास्यशङ्का कर्त्तव्या ।

यद्यपीदानीं तादृशा राजानो न सन्ति तथापि यादृशाधनिनो राजान उच्यन्ते तादृशैरेव निजामात्यपदेषु पण्डिता नियोजयितुं शक्यन्ते । ये ये धनिनो विद्यालयान् संस्थाप्य संस्कृतविद्यामध्याप्य विद्यार्थिनः पण्डितान् कुर्वन्ति ते यदि स्वतः परतोवा तेषां वृत्त्युपायं किञ्चित् कर्म तेभ्योदत्त्वा दापयित्वा वा तान् सुस्थितान् कुर्युस्तदा संस्कृतविद्याया उन्नतिः संस्कृतपण्डितानाञ्च स्थितिः सम्भवति । यदा पण्डिताः पञ्चदश विंशतिं वा रजतानि मासिकीं वृत्तिं प्राप्य विद्यालयेषु शिक्षकत्वं कुर्वन्ति तदा धनिनः पञ्चदश विंशतिं वा रजतानि तेभ्योदत्त्वा कर्म कारयितुं न शक्नुवन्तीति दूरापेतमेतत् ।

परन्तु ते विद्यार्थिनः यथा गणनां विषयकर्माणिच विद्यालयेषु शिक्षितु मर्हन्ति तथाव्यवस्था कर्तव्या अपिचाङ्गल भाषा मपि यथा अध्येतुं पारयेयुस्तथा यत्नोऽपि कर्त्तव्यः । आङ्गलविद्या यदि सखीव संस्कृतविद्यायाः सहकारिणी स्यात् तदा मणिकाञ्चनयोगइव संस्कृत-

विद्यापि परमशोभना भवेदित्यस्माकं मतम्। जीविका च तया संस्कृतविद्यया सुकरा भवेत् । (क्रमशः)

श्रीमहेशचन्द्रतर्कचूडामणिः ।

——:o:——

## मत्सुयामस्य मुकुरः । *

( जापानीयोपकथा )

बहुपूर्वम् 'इचिगो' विषये 'मत्सुयाम' नगरे कश्चिदनुगुणः परिवारोऽन्यवसत्; तस्मिन्नेको भद्रो गृहपतिः, तत्सहधर्म्मिणी, तयोश्चैका शिशुर्दुहिता आसन् ।

अयं खलु परिवारकर्त्ता कदाचित् कस्मैचिदवर्जनीयाय कर्म्मणे तन्नगरं परित्यज्य गन्तुं प्रयतोऽभवत् ।

साम्प्रतं तत्र पर्यटनस्य लौहवर्त्मादयो बहवः सुखोपाया विद्यन्ते परन्तु पुरातनसमयेषु नैतादृशं पर्यटनसौकर्यमासीत् । तदानीं किल 'इचिगो'-विषयात् तस्य तदानीन्तनी राजधानी 'क्योटो' नगरी बहुभिर्दिवसैः पद्भ्यां गन्तव्याभूत् । अतो न केवलः पथिकः स एव, किन्तु तद्वियोगमापद्यमाना तस्य पत्नी कन्यका चेति सर्वेऽपि ते चित्तोद्वेगपरीता अभवन् ।

पतिरवोचत्—"यथासम्भवं त्वरितमहं प्रत्यावर्त्तिष्ये, सर्वमेषाहं ममास्यामनुपस्थितौ तुभ्यं विसृजामि आशंसेच—त्वं तथा प्रयतिष्यसे, यथास्माकं बहुमतेयं वत्सा न क्लिश्यत इति" ।

दयितायाः नयने अश्रुभिः प्लवमाने संवृत्ते । उक्तं तया "प्रियस्यात्मनः कृते त्वया यावत् सम्भाव्यं यत्नः समास्थेयः, अन्यच्च कर्म्मणः सम्पत्यनन्तरं नैकमप्यधिकं दिनं तत्र त्वयावस्थेयमिति" ।

---

* "The Mirror of Matsuyama" ( Jwaya's Fairy Tales Old Japan. इत्यस्यानुवादः ।

अथ तद्वियोगदुःखं सर्वथानवबुध्यमाना तयोः सा मुग्धस्वभावा शिशुकन्यका अपरापरशिशुरिव पितुः परिच्छदान्तं गृहीत्वा परिष्वजमाना तं तदानीमवदत्—"तात, तवेह वियोगसमये काममहं सुशीला तिष्ठेयं, तत् त्वया मदर्थं किञ्चिदुपायनमानेयम्"।

पतिर्गृहादगन्तुमुद्युङ्क्त। पत्नी तनयामङ्के निधाय प्रवेशद्वारपर्यन्तं तमन्वगच्छत्, अपश्यच्च यावत्तदुष्णीषं दूरकुहेलिकया नाव्रियत।

माताकथयत्—"भद्रं वत्से, पिता तावत् ते प्रयातः, त्वमिदानीं जनन्या सह सुशीलशिशुरिव गृहं रक्षिष्यसि"।

"एवं, परन्तु प्रत्यावृत्ते ताते, उपायनमेकं मे प्रदातुं न त्वं जननि तं प्रार्थयिष्यसे?"

"नूनमहं प्रार्थयिष्ये; कांचिन्मनोरमां शालभञ्जिकामानेतुं दृढसङ्कल्पार्थं माता ते पितरं याचितवती; स तां तृत्कृते ध्रुवमानेष्यति"।

"अहो कथमिदं शोभनं! कथमिदं शोभनम्!" दुहिता विलसत् स्ववदनमण्डलं पश्यन्त्या मातुर्द्विगुणं प्रियासीत्। सा खल्ववकाशसमये सुतया सह कदाचित् केलिपुत्रकेभ्यो भोजनोत्सवप्रदानेन कदाचिद्वा तस्यै चेतोरञ्जनेन प्राचीनकथाकथनेन गच्छत्सु विप्रयोगदिवसेषु आत्मानं विनोदयितुं किञ्चिदालम्बन मिवाध्यगच्छत्।

पतिः स्वकृत्यं सम्पाद्य 'क्योटो' नगरात् त्वरितं प्रत्यावर्त्तत। दूरपर्यटनेन तस्य पाणिपादं वदनं च सूर्यकिरणेन तथा दग्धमिवाभूद् यथा यदा स प्रत्यागतः, तदा तत्सम्बन्धिनो जनान् विना नान्यः कोऽपि प्रथमं तं प्रत्यभिज्ञातुमशक्नोत्। तावन्तं दीर्घकालं सानुरागं चिन्तयन्ती तु तस्य पत्नी कन्यका च निसर्गतस्तत्क्षणमेव तमभ्यजानीताम्। स तयोरेकां दक्षिणतः, अपरां च वामतः संस्थाप्य कुशलप्रश्नमपृच्छत्। तेऽपि तस्मै तस्य स्वास्थ्यं, विप्रविरहं चाजिज्ञासताम्। अथ स ताभ्यां विश्रामगेहमविशत्।

तत्र क्षणं विश्रम्य स समानीतां चर्मपेटिकामपावृत्य काञ्चिद् रुचिरां शालभञ्जिकां बहिरकरोत्, अददाच्च कन्यकायै इदं कथयि-

त्या—' वत्से, त्वदर्थमियमानीता; पुरस्कारोऽयं ते, यत्त्वं मदनुपस्थितौ गेहार्थे शोभनं यत्नमास्थितवतीति'।

तादृशीमुत्तमां पुत्तलीं तत्र तत्पूर्वं जात्वपि अनालोकितवती सा कन्यका पितरं प्रत्यतितमां सन्तुष्यन्ती कराभ्यां तां गृहीत्वा तत्सौन्दर्यवशीकृतेव अभिष्यन्दमानेनेवानन्दरसेन तस्मिन् स्थाने उपाविशत्।

ततः स तच्चर्मपेटिकातो गृहीतैकमुकुरः प्रियामुपसृत्य "तवायमुपहार" इति समार्पयत्। सापि समुचितादरपूर्वकं स्वीकृत्यैनमपश्यत्। परन्तु सा खल्वजाताभ्युदयेषु दिवसेषु "इत्रिगो" प्रदेशे (अनुमते) लालिताभवदिति नैतत्पूर्वं मुकुरमिव पदार्थं कदाचिदैक्षत। अतोऽत्यन्तमौत्सुक्येन किमेतेन क्रियत इति दयितमजिज्ञासत। हसन् स प्रत्यवोचत्—"अयं मुकुरो नाम, लोकैरयं स्वप्रतिबिम्बदर्शनार्थं व्यवह्रियते; अस्मिन्निव प्रदेशे यावन्न किमेषोऽभिलष्यताम्, परन्तु न कथमपि लभ्यते। नियतमहमश्रौषं यत् 'क्योटो' प्रदेशेऽयं प्राप्यते; अचिन्तयं च तदानीं तत्र वर्त्तमानोऽहं यत्तत्संग्रहार्थं स एवावसर इति; तेन चाहमेनमानयम्, आशंसे त्वमेतत्कृते यत्नमाधास्यसीति"।

पत्नी मुकुरागमवृत्तान्तमाकर्ण्य परं प्रमोदमापन्ना "यतोऽयं महार्घः, ततोऽहमेनम् आत्मानमिवावधारयिष्यामि, तथा च करिष्यामि यथायं न क्षीयत" इत्युक्त्वा असकृन्मूर्द्धनि निधाय (आचारोऽयं जापानीयानां कृतज्ञत्वप्रदर्शने) सयत्नं तं पेटिकायामरक्षत्।

अथास्मात्प्रख्यातात् पर्यटनात् कानिचिद्वर्षाण्यतीतानि, महार्घा मणिरिव चाद्रियमाणा तयोर्दुहिता बाल्यमत्यवर्त्तत।

दुःखाकरमिदं वर्णयितुं यत्तस्या जननी सपदि प्रकामं व्याधिमापन्ना।' सा हि प्रकृत्या नितान्तं स्नेहशीलेति जनन्यां पीडितायामतितमाम् उत्कण्ठामभजत। दिवा वा रात्रौ वा न जातु सा मातुः शय्यापार्श्वमत्यजत्। सा हि मातरं भेषजपानार्थं प्रेरयन्ती, मन्दमन्दं पृष्ठे करतलपरामर्शेन व्याधिवेदनोपशमनार्थं प्रयतमाना, अन्यांश्च

हिन्दुभिरतियोग्यतया 'पतितपावन' इति भगवतो नामधेयं कीर्त्यते। नेदमाशास्यं यत् कं नु नाम धर्ममिदं तैः प्रदत्तं नामधेयं प्रकाशयतीति न ते पतितान् उद्धरिष्यन्ति? कियदिदमसमञ्जसमिति न दुर्विज्ञेयं यत्तावत्स निम्नजातीयो जनोऽस्पृश्यत्वेन मन्यते, यावत् स हिन्दुत्वेन तिष्ठति, परन्तु ततः परमेव, यावदेव स खीष्टीयं धर्मं गृह्णाति युरोपीयं नामधेयं धारयति, परिदधाति च मस्तकावेष्टनं (hat) तावदेव क्रियते तेन करमर्दनं, प्रदीयते च तस्मा आसन्दीति।

स खलु पत्रिकासम्पादकः सप्रपञ्चं प्रागुक्तान् विषयानालोच्य, तेन हिन्दूनां ह्रासप्रतीकारसमर्था एते उपाया आपतन्तीति कथयति—१ जाठानाम् पञ्चनदीयानां चापरेषामिव युक्ते वयसि विवाहः,—अपाकरणं च शैशवविवाहस्य; (२) वरवध्वोर्वयसो रसाम्यवर्जनम्; (३) सन्तानहीनानां विवाहयोग्ये वयसिवर्त्तमानानां विधवानां पुनर्विवाहः; (४) निम्नजातीयेषु कुसंस्कारोच्छेदः, यथा तेऽस्पृश्यत्वेन न गण्यन्ते, तेभ्यः शिक्षाप्रदानं, बुद्धिप्रभावानुसारेण, चारित्रानुसारेण च सम्मानप्रदर्शनम्; [५] समाजेषु प्रथममवान्तरस्य, ततश्च मूलस्य जातिभेदस्य समुच्छेदः, लघूकरणं च विवाहव्ययस्य—येन विवाहस्य नात्यायाससम्पाद्यतया कन्यकानामुत्पत्तिः शाप इव न मन्येत, परिपाल्येरंश्च ताः सयत्नम्; [६] स्वास्थ्यानुकूलेषूर्वरेषु प्रदेशेषु, तादृशेषु च स्थानेषु—यत्र क्षिप्रतरा जीविका लभ्या गत्वा निवासः; [७] जनानां मौलिकोत्कर्षसम्पादनं च।

हिन्दुसंख्याधिक्येऽपरोऽपि कश्चिदुपायोऽस्ति, स च धर्मान्तरीयस्य हिन्दुधर्मेऽवस्थापनम्। अहिन्दुरपि हिन्दुभूत इति कथयतीतिवृत्तम्। अद्यत्वेऽपि परिवर्त्यत एव हिन्दुर्हिन्दुत्वेन। सिंहभूमछोटनागपुर—बरम्बा-प्रभृतिषु केषुचित् स्थानेषु 'हस'—'पन'—'सन्ताला'दयः (Hos, Pans, Santals) अनार्या अपि हिन्दुदेवदेवीपूजनेन, क्वचित् यज्ञसूत्रधारणेन, दासोपाधिधारणेन, द्विजाभि

धानेन, वैष्णवधर्मप्रचारणादिना च स्पष्टमात्मानं हिन्दुत्वेन कीर्त्तयन्तीति।

* * * * * * * *

अधस्तात्प्रदर्शितेष्वक्षरेषु सर्वेषां न सम्मतिः स्यादिति न वयं स्वप्नेऽपि शक्नुमश्चिन्तयितुम्। नूनमस्माकं केषाञ्चिज्जर्जरेयुस्तानि श्रवणविवराणि। तथाप्यस्तीह किञ्चिदुपादेयं, यस्य स्वीकारे न कापि सम्भवति क्षतिः शास्त्रतो वा लोकतो वा। तत् खल्विदं यत् विपत्तिसमयेषु खीष्टधर्मप्रसारनिरतैरिवास्माभिरपि दुर्भिक्षादिदुःखदूनानाम् अनाथानां शिशूनां च जनानां च रक्षणं च पोषणं च नाम.। को नाम मूर्खोऽपि कथयेत् यदयमपि पन्थाः प्रतिषिद्धोऽस्मच्छास्त्रैरिति। अस्मभ्योऽनधिगतसाहाय्याः, भ्रमेऽप्यनवेक्षिताः दुर्भिक्षदहनदह्यमानास्ते हि तपस्विन उपकारकेषु तेषु युरोपीयेषु यन्निसर्गेणैव स्निह्येयुः, किं तत्रापरं वक्तव्यमवशिष्यते। स्वयमेव हि वयं स्वजनान् हारयाम इति न जात्वप्यस्माकं चेतसि समुदेति।

अन्यच्च। अतियुक्तमुक्तं प्रबन्धलेखकेन यन्निम्नवर्णोऽपि गृहीतखीष्टधर्मस्तदुचितं व्यवहरन् सद्य एव केनाप्यंशेन यथाकथमपि मान्यत एव। अतिरोहितः खल्वयमर्थः सर्वत्र सर्वेषाम्। नैवात्र कोऽपि न्यायोऽधिगम्यते, येनास्माकं तादृश आचारः प्रतिपाद्येत युक्ततया। अतो नूनमयमस्माकं चेतसः कश्चिदनुचितः संस्कार एव। कीटोऽपि नावज्ञेय इति येषां शास्त्राणामादेशः, त एवामी वयं यदि मानवमवजानीयाम, तर्हि महदनुचितमस्माभिः कृतं स्यादित्यकामेनापि वक्तव्यम्। न वयं जातिसमुच्छित्तये तदिदं व्याकर्त्तुं प्रवृत्ताः, जीवत्वायुष्मती जातिर्यावत्सेच्छेत्। न तेऽधमजातीया अवज्ञेया इति हि कथयामः। कथमवज्ञानं भवति, कथं वा न भवतीत्यन्यदेतत्। न वयं तदिह किञ्चिद्वक्तुं प्रभवामः। पृच्छन्तु भवन्तः अन्तरात्मानम्, चिन्तयन्तु च पुरस्कृत्य न्यायं च मनुष्यत्वं च। अवश्यमिदं सर्वैर्न्यायानुसारिभिः स्वीकर्त्तव्यं यत् युक्ते पथि

विचरन्, नितान्तमधमजातीयोऽपि नास्मत्सकाशात् पशूचितं सत्कारमर्हतीति। किं बहुना, यथास्माभिः साम्प्रतं युरोपीयेष्वाचारः प्रदर्श्यते, अस्मत्समाजेषु निकृष्टजातीयेभ्यस्तादृशस्याचारस्य प्रदानं नाम न कथमपि विप्रतिपत्तिकोटिमर्हति। युरोपीया इवामी न शिक्षिता इति चेत्, शिक्षानुसारेणैव व्यवस्थाप्यतामङ्ग, सत्कारः, गृह्यतां च "गुणाः पूजास्थानं, गुणिषु न च लिङ्गं, न च वय इति।" किञ्चामीषां शिक्षाया अभावेऽपि यूयमेवापराध्यन्ति, युष्माभिरेव हि ते शिक्षणीयाः। स्वं दोषं परस्य शिरसि स्थापयित्वा तमवजानन्तः के नाम कुत्र प्रशस्यन्ते। एवमपि मनुष्यास्ते न पशुव्यवहारमर्हन्तीति विचार्यमेव।

अथ विद्यमानायां जातौ नैतत्सुकरमिति? नैतत्परीक्षकाणां विचारक्षोदं क्षमते। किं न पश्यति भवान् जातिर्नामेयं साम्प्रतं भोजनमात्रे, विवाहमात्र एव च परिच्छिन्नेति। कामं भवांस्तैर्भोजनं च विवाहं च मा कार्षीत्। द्वयमपीदं साधु संरक्ष्य शक्यतएव निकृष्टजातीयैः सादरं ससत्कारं च समाचरितुम् न च नाद्यापि बहुषु स्थानेषु समाचरन्त्युदारचेतसः। बहवो हि नितान्तं निकृष्टजातीयाः पुरुषाः तेषु तेषु स्थानेषु ब्राह्मणाद्यैर्वर्णैः पितृव्यमातुलादिभिः विविधैः सम्बन्धपदैः सम्बोध्यन्ते, व्यवह्रियन्ते च यावच्छक्यं तदुचितम्। इममेवाचारं सार्वत्रिकं व्यवस्थापयितुं किं छिद्येत शास्त्रानुसारिणामपीति विचारयन्तु ते।

——:०:——

# मित्रगोष्ठी-पत्रिका।

(मासिकं संस्कृतपत्रम्।)

"संगच्छध्वं.सवदध्वं सं वो मनांसि जानताम्"

ऋग्वेदः।

तृतीये वर्षे ] १८२८ शकाब्दाः, चैत्रः। [ द्वादश संख्या

## भारतवैभवम्।

प्रकृतेः कृपया भारतीया भूमिः सर्वस्माद्देशादुर्वरा। अतो भिन्नदेशीयैरतिकृच्छ्रात् यल्लभ्यते भारतीया मातुरङ्क एव स्थित्वा तल्लभन्ते। तेनैव अन्नं नास्तीति चिन्ताया विमुक्ता भारतीयाः सर्वजनीनवृत्तिपर्यालोचनया जैवमुत्कर्षमार्गं प्रकटीकृत्याद्यापि विश्वमिदं चमत्कुर्वन्ति। स्वाधीनचिन्ताप्रधानेन शिरसा यन्त्रादिकं निर्माय विश्वहृदयमुल्लासयन्ति च। शस्यलोभात् वैदेशिका वणिजो वाणिज्यार्थं सागरमुपसागरं चोल्लंघ्यागच्छन्ति भारतीयभूभागम्। एवमस्माद्-दयन्यानि मणिरत्नादीनि प्रवालादीनि च भारतीयखनिगर्भात् समुद्राभ्यन्तराच्चोत्पद्यन्ते। एतेनैव भारतभूमीरत्नप्रसविनीति भिन्नदेशीया भारतं प्रति सस्पृहं तीक्ष्णां दृष्टिं निक्षिपन्ति। एवं धनलुब्धा वीराङ्गना वीरवर्गाश्च धनलोभैराकृष्टचित्ताः प्राग् बहुशो भारताङ्गनमपहृतवन्तः। महाराज्ञी 'सेमीरामिस' * प्रेम्णा भारतीयार्थमालिङ्ग्य परं सुखं प्राप्तवती। महाप्रतापशालिनः डेरायसाख्यस्य † म्लेच्छराजस्य धनोन्मत्ततामपनीतवत्येषा भारतभूमिः। महावीरस्य

* Semiramis, Queen of Assyria.

† Darius, king of Persia.

आलेकजाण्डारस्यापि * धनकण्डूयनमत्रैव निवृत्तम् । ससैन्यवीराग्रवर्त्तिनः तैमुरादयोऽप्यत्रैवागत्य धनपिपासामुच्चिच्छिदुः । एवं यस्मिन् कस्मिन् समये येषां केषाञ्चित् धनपिपासा बलवती जाता, तैरत्रैव तत्पिपासोपशमिता । पुरा मिसर—फिनीसिया—ग्रीस—आरबप्रभृतयो देशा भारते एव वाणिज्यं कृत्वोन्नतेः परं पदं लेभिरे। न जाने भारतीयाः कथं मूकास्तिष्ठन्ति । यातु तावत् धनविषयिणी कथा । अथ यदैव विभिन्नाया रुचे र्विचित्रबुद्धेश्चाधिक्यं मानवानां जातम्, तदैव शिल्पनैपुण्यं प्रादुरभूत् कस्यापि प्रतिकृतिमदृष्ट्वा कस्मादपि तत् कौशलमगृहीत्वा च स्वचेष्टया भारतीया यथा महच्छिल्पकौशलं प्राप्तवन्तः, तथाद्यापि भिन्नप्रदेशीया स्तल्लेशमपि न जानन्ति । यैः खलु अयोध्यावर्णनं, मथुराया यथास्थानसंस्थितानां विभागविन्यस्तानां वस्तूनां सौन्दर्यकथनं, इन्द्रप्रस्थस्य राजपरिषदो निर्माणकौशलञ्चैतिहासिकवृत्तं श्रुतम्, वर्त्तमानेऽपि ताजमहलाख्यः प्रासादो दृष्टश्च, तैरेव भारतीयस्थापत्यविद्याशिल्पनैपुण्ययो र्भूयःप्रशंसा मुखशतेन कर्त्तुमिष्येत । बौद्धशासनदशायामपि अजन्त—कार्लि—इलोरा—एलिफेण्टाप्रभृतीनां शिल्पकीर्त्तिकलापोऽद्यापि प्राचीनभारतीयानां कर्मनैपुण्यं सूचयति । हन्त अन्तर्हिता सा लक्ष्मीर्भाग्यञ्चास्माकम् !

वर्णसंमिश्रणेऽपि प्राचीनानां महत्पाण्डित्यमासीत् विवाहसामयिकीं जनकतनयासीतायाः प्रतिकृतिमवलोक्यायोध्यान्तःपुरचारिण्यः सभ्याश्च परं विस्मयं जग्मुः । एवं विस्मयवन्ति बहूनि निदर्शनानि सन्ति । किन्त्वनेकशो राज्यविप्लवाददर्शनं गता परमा चित्रविद्या ।

तथा समरनैपुण्येनापि परपक्षं स्तब्धीकुर्वन्तो भारतीया राजन्याः जगत्त्रयं चमत्कृतवन्तः । ते सादिनो रथिनः पदातिका हास्तिकाश्च सन्तो यथान्यायं समरभूमिमवतरन्तोऽपूर्वरचनया वैपक्षि-

* Alexander the great, king of macidon.

काक्रमणान् निःशङ्कमात्मानं निराकुलयन्तिस्म। साम्प्रतञ्च समरभूमे दूराद्दूरतरसंस्थितानां परमसाहसिकानां सेनानायकानां न कश्चित् तादृशव्यूहरचनक्रममुद्भावयति उद्भावयिष्यति वा। एवं प्राया मानवानां मतिः यत्किल तेषां केचित् शरशरासनमात्रसहायाः केचिच्च गदाखड्गधारिणः समरभूमिमवतरन्ति स्म। न ज्ञातवन्तस्ते साम्प्रतिकं रणकौशलं तत्प्रसाधनोपायञ्च। किन्तु ये किल रामायणं-महाभारतञ्चाधीतवन्त, स्ते नैवात्र संशयाम्बुधावात्मानं निमज्जयन्ति। तौ रामरावणौ महावीरौ रणमूर्द्धनि यान्यस्त्राणि व्यवहृतवन्तौ तेषां मध्ये साम्प्रतं 'कामान' इति यस्य प्रसिद्धि स्तस्य नामपदमपि श्रूयते। येन शतं हन्तीति व्युत्पत्त्या प्राक् तस्य शतघ्नीति संज्ञा आसीत्। तत्र रामायणे लिखितमस्ति—

" परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महास्वनाः" ॥ इति।

अन्यच्च मान्धातुर्दिग्विजये वर्त्तमाने 'वन्दुक' इति यस्य प्रसिद्धिः, तस्य "कवनक" इति नाम्ना, खरदूषणयोर्युद्धे नालिकास्त्रमिति नाम्ना च ख्यातिरासीत्। कट्लिनामा युरोपीयः कश्चिच्छिल्पिप्रवरः पश्चिमप्रदेशे गङ्गाया जलनिर्गमप्रणालीखननावसरे भूगर्भस्थं प्रासादादिकं दृष्ट्वानुमितवान् यत् तदेतदितिहासप्रसिद्धं हस्तिनापुरमिति। तत्र च स बहुविध वस्तुजातं दृष्टवान्, तेषु प्रस्तरमयं लौहमयञ्चानेकं गुड़कमेकां शतघ्नीञ्च प्राप्तवान्। दृश्यते च नीतिचिन्तामणौ कृष्णशाल्वयोर्युद्धेऽपि शतघ्नीप्रहरणमासीदिति।

"और्वाग्निं प्रोथितं कृत्वा शतघ्नीर्गुड़कैर्युताः।" और्वनाम्नो मुनेर्जातत्वात् 'वारुद' इत्यस्य और्वाग्निरिति संज्ञा जाता। गुड़कशब्देन वर्त्तुलाकारः पदार्थविशेषः 'गोला' इत्यवबुध्यते। तथाचामरः "स्याद्गुड़ो गोलेक्षुपाकयोरिति।" एतत् सर्वं निदर्शनं दृष्ट्वा कथं भ्रमो यत्पुरा वर्त्तमानसदृशं युद्धकौशलं प्रसाधनं च नाविरभूत्।

ज्योतिर्विद्यायामपि भारतीयकृतिनः परमुत्कर्षं प्राप्तवन्तः । किन्तु ज्योतिर्विदाचार्येषु कस्तावत पूर्वतनः को वा परकालिकस्तत्रानुसन्धित्सूनामैकमत्यं नावलोकयामः । केऽपि पराशरं केऽपि सूर्यसिद्धान्तकारं केऽपि ब्रह्मसिद्धान्तकारं प्राथमिकं मन्यमाना विवदन्ते । किन्तु शम्भुप्रकाशग्रन्थकृन्मते प्राक् सोमसिद्धान्तकारः, ततश्च वराहमिहिरः स्वजन्मना ज्योतिर्वित्कुलमुद्भासयन् भारतभूमेर्गौरवं वर्द्धयामास । तत आर्यभट्टो भास्कराचार्यश्च नवं नवं कौशलमुद्भाव्य ज्योतिषशास्त्रस्य परमुत्कर्षं स्थापयामास ।

चन्द्रसूर्यग्रहणस्य, नक्षत्रवृत्तस्य, राशिचक्रस्य, अपां वृद्धिक्षयस्य च तत्त्वनिरूपणे भारतीया एव प्राक् सिद्धमनोरथा भवन्ति स्म । तथाच विष्णुपुराणे—

स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा ।
तथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तमाः ॥
न न्यूना नातिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च ।
उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै ।
अपां वृद्धिक्षयौ दृष्टौ समुद्राणां महामुने ॥ इति ।

रव्यादिवाराणां प्रतिपदादितिथीनाञ्च क्रमानुपाती व्यवहारनियमश्चादौ प्रज्ञावतामार्याणां मूर्द्धन्येवाविरभूत् । तस्य च्छायां गृहीत्वा पाश्चात्त्याः पण्डिता नामान्तरं विधाय दिग्दिगन्तेषु स्वपाण्डित्यं ख्यापयन्ति । सान्डे (Sunday) मन्डे (Monday) इत्यादीनां रव्यादिवारवाचकानां शब्दानामर्थं परिशीलयतां पाठकानां भवतां सुविदितमेतत् स्यात् ।

यस्मिन् दिवसे दिनमानं रात्रिमानञ्च तुल्यं स्यात् तत् पण्डितटलेमि Stolemy जन्मनः प्राक् भारतीयज्योतिर्विद्भिः निरूपितम् । एवं यस्मिन् दिने इटालीदेशीयः पण्डितः कोपार्निकस्-Copernicus नामा पृथिव्या आह्निकगतिं वार्षिकगतिञ्च निरूप्य स्वगणं चमत्-

तवान्, तस्मादतिपूर्वं भारतीयज्योतिर्वित्कुलतिलकैः प्रकाशित-
तत् ।

प्रायेण पाश्चात्यशिक्षया शिक्षितानां नव्यानामेतन्मतं, यद्भार-
ीयाः किल त्रिकोणत्वेन भूमण्डलं ज्ञातवन्तः, न पुनर्वृत्ताकारं ।
यमद्य युरोपीयराजप्रसादात् 'पृथिवी नागरङ्गवद् वर्त्तुलाकृति'
ेति सुष्ठु ज्ञातवन्तः । किन्तु भारतेऽस्मिन् युरोपीयछायापातात्
ाक् सूर्यसिद्धान्ते ऽभिहितम्—

'सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः ।
कदम्बकेसरग्रन्थिः केसरप्रसवैरिव ॥' इति ।

ब्रह्माण्डशब्दस्य व्युत्पत्त्याप्ययमर्थः सर्वेषां सविधे प्रतिभायात् ।
ागरङ्गदृष्टान्तात् किं दृष्टान्ततयोदाहृतं कदम्बकुसुमं भूगोलत्वस्या-
धिकं परिचायकं न स्यात् ?

ाक्षत्रकल्पेऽपि लिखितमस्ति यत्—

"कपित्थफलवद् विश्वं दक्षिणोत्तरयोः समम् ।" इति ।

एवमस्मिन् समये यद् गोलकं निर्माय छात्रान् शिक्षयन्ति तदपि
अनुकृतिकुशलै रनुकरणे पाण्डित्यं दर्शितम् । तथाहि पदार्थदीपि-
कायाम्—

"अभीष्टं पृथिवीगोलं कारयित्वा तु दारवम् ।
तद्वत् खगोलकं कृत्वा गुरुः शिष्यान् प्रबोधयेत् ॥" इति ।

पृथिवी गतिशक्तिमतीति युरोपीयगुरोः कृपया वयं ज्ञातवन्त
इति स्वगौरवं ख्यापयन्ति नव्या भ्रातरः सर्वे । किन्तु ग्रीस्देशीय-
पिथागोरासाख्यस्य * पण्डितप्रवरस्य जन्मनः प्राक्, इटालिदेशीय
कोपार्निकसाख्यस्य † पण्डितकुलपतेर्बुद्धिस्फुरणात् पूर्वं कथितमे-
तदार्यभट्टेन— ‡

---

* Pythagoras, Greek Philosopher.

† Copernicus, Prussian Astronomer.

‡ अत्रेदमवधेयम्-पिथागोरासो नाम खीष्टपूर्वषष्ठशतक आसीत्,

"चला पृथ्वी स्थिरा भातीति"

"भूपञ्जरः स्थिरो, भूरेवावृत्त्यावृत्त्या प्रातिदैवसिकौ ।
उदयास्तमयौ सम्पादयति ग्रहनक्षत्राणाम् ॥ इति ।"

आर्यभट्टस्यैतत् सिद्धान्तोदकं फल्गुप्रवाह इवान्तर्गत्या ग्रीसप्रणालीकया युरोपमपि प्लावयामास । अनयैव पृथिव्या गतिक्रियया विभिन्नदेशेषु सूर्यस्योदयास्तमानेषु महद्वैपरीत्यमनुभूयतेऽस्माभिः। लिखितश्चैतत् सिद्धान्तशिरोमणिगोलाध्याये—

"लङ्कापुरेऽर्कस्य यदोदयः स्यात्,
तदा दिनार्द्धं यमकोटिपूर्याम् ।
अधस्तदा सिद्धपुरेऽन्तकालः,
स्याद्रोमके रात्रिदलं तदैव ॥"

"भद्राश्वोपरिगः सूर्यो भारतेऽत्रोदयं रवेः ।
रात्र्यर्द्धं केतुमालाख्ये कुरवेऽस्तमनं तदा ॥"

अन्यच्च शास्त्रानभिज्ञाः प्राकृतप्राया एवमापादयन्ति, यत् किल पृथिवी सर्पशिरस्यवतिष्ठते । यदैव शिरः सञ्चालयति, तदैव भूकम्पेन जगत् क्षुभ्यति । किन्तु यदेषा पृथिवी आकर्षणगत्या शून्येऽवतिष्ठते एतद् युरोपीयगुरोः कृपया परिज्ञातमस्माभिः । सम्भावयामोऽत्र यत् सूर्यसिद्धान्तरहस्यपाठेनास्माकं भ्रम एषोऽपनुद्येतेति। तथाहि—

कोपार्निकसस्तु बह्वर्वाचीनः, खीष्टषोडशशतकवर्त्ती । तत्र भवान् आर्यभट्टश्चास्माकं पञ्चमशतके (४७६) यः खल्वस्मद्देशे प्रथमं पृथिव्या वर्त्तुलाकारत्वं गतिमत्त्वं च प्रकाशयामास । अतः प्रबन्धकारमतं नात्र समीचीनं भाति । श्रूयते पाश्चात्त्येषु 'ग्यालिलियो' (Galileo, Italian astronomer 1564-1642) नामा एव प्रथमं पृथिव्या गति मुद्भावयामास । वैदिकशब्दैरपि पृथिव्या गतिः सूच्यते । प्रथमवर्ष ज्येष्ठमासीयपत्रिकायां "वेदे पृथिव्यागति" रिति सन्दर्भो द्रष्टव्यः । मि० प० स०

"भूगोलो व्योम्नि तिष्ठति ।" इति ।

एवं भास्कराचार्येण सिद्धान्तशिरोमणिग्रन्थे लिखितम्—

"नान्याधारं स्वशक्त्या वियति च नियतं तिष्ठतीहास्यपृष्ठे ।

निष्ठं विश्वञ्च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात् ॥" इति पाश्चात्यशिक्षया सुशिक्षितमिदं जगत् प्रायेण वक्षः स्फारीकृत्य प्रचारयतीदं यत् 'न्युटन्'* स्वजन्मना पृथिव्याः केन्द्राकर्षणशक्तेर्गूढ़रहस्यमुद्भेद्य जगदिदं प्रथमं जागरितवान्। किन्तु न्युटनसकाशाच्छिक्षामलभमानै रार्यकुलतिलकै र्विपश्चिद्भिः स्वयमेव आविष्कृतमेतत् पृथिव्याकर्षणशक्तेर्गूढ़रहस्यम्। तथाहि भास्कराचार्येण गोलाध्याये ऽभिहितमेतत्—

"आकृष्टशक्तिश्च मही, तया यत्
खस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते, तत् पततीति भाति,
समे समन्तात् क्व पतत्विमां खे ॥"

एवमार्यभट्टेनापि लिखितम्—

"आकृष्टशक्तिश्च मही यत् तया प्रक्षिप्यते तत् तया धार्यते ॥" मही पृथिवी आकर्षणशक्तिविशिष्टा, यद्वस्तु नरैः प्रक्षिप्यते तद्वस्तु तया आकर्षणशक्त्या पृथिव्या धार्येत, इत्यर्थः ।

पुराणादिशास्त्रस्य तात्पर्यमज्ञात्वा प्राकृता जना राहुं राक्षसत्वेनापादयन्ति, एवं स एव राक्षसरूपधृग् राहुश्चन्द्रसूर्यौ ग्रसति । तेनैव ग्रहणं भवति। पृथिव्यादेश्च्छायापातेन यद्ग्रहणं भवति, आर्या स्तन्न ज्ञातवन्तः किन्तु वयं इंराजी भाषाध्ययनेनैतज् ज्ञातवन्त इति । अहो धिगस्मान् । यत् शास्त्रचक्षुषा परिहीनैरस्माभिः किमपि न दृष्ट्वा न श्रुत्वा च सर्वतत्त्वोद्भावकस्य भ्रमप्रमादविरहितस्यार्यर्षिसंघस्य दोषसन्तति रुद्भाव्यते ! ब्रह्मपुराणे लिखितमस्ति, ब्रह्मणा राहुं संबोध्य कथितमेतत्—

* Sir Isaac Newton, 1662-17-27.

"पर्वकालेतु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि।
भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन॥" इति।

पर्वकाले पूर्णिमाप्रतिपत्सन्धौ च संप्राप्ते सति चन्द्रार्कौ छादयिष्यसि। केन प्रकारेण तदेवाह—भूमिच्छायागतः सन् चन्द्रं, कदाचिच्च चन्द्रगः सन् अर्कं छादयिष्यसीत्यर्थः। एवं सूर्यसिद्धान्तेऽपि लिखितम्—

"छादको भास्करस्येन्दुरधस्थो घनवद् भवेत्।
भूच्छायां प्रमुखश्चन्द्रो विशत्यर्थो भवेदसौ"॥

एकार्थवाचिनो हि तमोराहुच्छायाशब्दाः। ज्ञायते ह्येतत् सर्वैः। अतोऽत्र सर्वथा राहुशब्देन छायारूपोऽर्थः प्रतीयते। एवं तर्हि खण्डिता नो राहौ राक्षसबुद्धिः?

एवं नक्षत्राणां लग्नप्रभवादौ पृथिव्यां जीवोद्भिदादिषु काऽवस्था कीदृशो वा फलोद्गमः स्यात्? तथा नक्षत्रादीनां गतिमवेक्ष्य राज्यविप्लवमारीभयरोगव्याप्तिदुर्भिक्षसुभिक्षादीनां कथं सञ्चारः? लग्नविशेषोत्पन्नानां मानवानां कीदृशमायतिफलम्? एतत्सर्वं निर्णेतुमार्यज्योतिर्विदाचार्या यथा समर्था बभूवुः, तथा साम्प्रतं कुत्रापि नावलोक्यन्ते तादृशास्तत्त्वज्ञानिनः। जगत्सारभूतैषा भारतभूमि ज्ञानतुलिकया सर्वेषां दर्शनीयानां तत्त्वानामादर्शचित्रं विरचयन्ती साम्प्रतं केन पुनः कालभुजङ्गेन दष्टा, ज्ञानैः परिहीना मृतप्राया तिष्ठति।

श्रीरमेशचन्द्रवेदान्तविशारदः।

——:|:*:|:——

प्रश्नः—

जातिभेदस्य किं मूलम् ? कीदृशौ वा तस्य गुणदोषौ ?

उत्तरम् ।

वैदिकधुरन्धराचार्य श्रीसत्यव्रतसामश्रमि महाशयानाम् ।

गुणकर्मजन्यान्येव जातिभेदस्य मूलानि; सामाजिकामुष्मिकोन्नत्यादीनि तु तद्गुणाः ऐक्यबाधश्च तद्दोष एकः। लिखितश्चैतद् विस्तरशो मयैतरेयालोचने ।

---

विज्ञानचिन्तामणि' सम्पादक पु० श्रीनीलकण्ठशर्ममहाशयानाम्-

जातिभेदः प्रकृतीर्गुणमयीरवलम्ब्यातिचिरात् प्रतिष्ठापितोपि पुनस्तत्तद्व्यापारवशात् जनानां अभावभेदाच्चानेकसहस्रशाखो देशभेदेन भिन्नभिन्नश्च वर्त्तत इति श्रौतस्मार्त्तक्रमताचारादिष्वनतिविशेषाणामवान्तरजातिविशेषाणामेकीकरणं गुणः पुनरपि भिन्नभिन्नतया विस्तारश्च जायताम् ।

---

सूनृतवादिनीसम्पादकानां श्रीमदप्पाशर्मविद्यावाचस्पतीनाम्—

विदितमेवैतत्प्रेक्षावतां यद्भगवता परमेश्वरेण प्रजानां विवृद्ध्यर्थमात्मनो मुखबाहूरुपादतः क्रमेण ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च निरमीयन्तेति। तथाहि स्मर्यते-"लोकानां स विवृद्ध्यर्थं मुखबाहूरुपादतः । ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥" इति ॥ कारणगताश्च गुणाः कार्यमनुवर्तमानाः सन्दृश्यन्ते । यथा मृद्गता घटादौ तन्तुगताः पटादौ स्वर्णगताश्च कुण्डलकटकादौ । एवं परमात्मनो मुखगता गुणास्तज्जन्ये ब्राह्मणे ऽन्ववर्तन्त बाहुगताः क्षत्रिये ऊरुगता वैश्ये पदगताश्च शूद्र इति नैतदाश्चर्यम् । कण्ठादुपरिवर्तमानः शरीरप्रदेशो मुखम् । तत्रैव च मस्तिष्कं भवति मस्तिष्कमेव च निवासो ज्ञानस्येत्याधुनिका अपि स्वीकुर्वन्ति। नन्वेतद्विहाय मस्तिष्क-

मन्यत्र विद्यमानमनुमन्यन्त आधुनिकाः। ततश्च येयं केवलाज्ञानश क्तिः सा किल परमात्मनो मुखावयवीभूते शिरसि निवसन्ती तज्ज न्येषु ब्राह्मणेष्वेवानुवृत्ता। बाहुगता तु क्रियाशक्तिर्वीर्यापरपर्याया सा चेयं ज्ञानशक्तिसापेक्षाऽपि न प्राधान्येन ज्ञानमुपजीवतीत्युपस र्जनीभूतमस्यामेतत्। ततश्च ज्ञानोपसर्जनीभूता वीर्यादिलक्षणा क्रिया शक्तिः परमात्मनो बाहुगुणः। स च बाहुजन्येषु क्षत्रियेष्वनुवृत्तः अस्ति चोर्वोरपि क्रियाशक्तिः किन्तु नास्यामुपसर्जनीभूतं ज्ञानं प्र त्युताज्ञानमेवोपसर्जनीभूतम्। एवं चाज्ञानोपसर्जनक्रियाशक्तिविशि ष्टत्वं परमात्मन ऊरुगुणः स एव च तज्जेषु वैश्येष्वनुवृत्तः। पादे पुनः क्रियाशक्तिं प्राधान्येन नावलम्बते प्रत्युतोपसर्जनतयैव। ज्ञा नस्य च नात्र कश्चित्सम्बन्धः सुतरां विप्रकर्षात्तन्निवासभूतस्य वद नस्येति। एवं च क्रियाशतमुपसर्जनीभूतमज्ञानमेव परमात्मनः पा दगुणः स एव च तज्जन्येषु शूद्रेष्वनुवृत्तइति प्रतीयते। अत्र ज्ञान पदं सत्वोपलक्षणं क्रियाशक्तिपदं रजसोऽज्ञानपदं च तमस इति बो द्धव्यम्। एवं च निसर्गसिद्धो ब्राह्मणेषु सत्वगुण स्तदुपसृष्टश्च रजोगुणः क्षत्रेषु तमसोपसृष्टो रजोगुणो वैश्येषु रजसोपसृष्टश्च तमो गुणः शूद्रेष्विति द्रष्टव्यम्।

एवं तत्तद्गुणविशिष्टतामेवामीषां कामयमानेन परमात्मना तत्तदवयवतो विनिर्मितैर्ब्राह्मणादिभिराजानसिद्धस्य परमात्मनाभि लषितस्य सत्वादिगुणस्याविक्षतये चाभिवृद्धये च प्रयतितव्यमि त्ययं न्याय्यः पन्थाः। येन च यथा यतितव्यममीभिः सोऽयमपि प्रदर्शित एव शमो दमस्तपः शौचमित्याद्युपदिशता भगवता वा सुदेवेन।

यदि सत्वं रजसा संसृज्येत तदाऽवश्यं हापयेदात्मनः प्राधान्य म्। रजसा हि संसृष्टमेतन्न केवलमात्मीयानपि त्वात्मन इव रजसो ऽपि धर्मानाविष्कुर्यात्। विजह्याच्च शुद्धसत्त्वत्वमात्मीयम्। एवं तमसापि संसृष्टं स्वस्येव तमसोऽपि गुणान्प्रादुष्कुर्यात्परित्यजेच्चा

त्मनो विशुद्धत्वम् । अत एव च विशुद्धं सत्वं कामयमानेन यथैतन्न रज आदिभिः संसृज्येत तथावश्यमवधातव्यम्, अत एव च चत्वारो वर्णाः परस्परं विभिद्यन्ते । यदि च नैते विभिद्येरंस्तदा परस्परं संसृष्टत्वाद्गुणानां संकरः सम्पद्येत । स चायं समानः सर्वानपि विशुद्धान् गुणान्समूलमुच्छिन्द्यात् । ततश्चाव्यवस्थया न कश्चिदपि सुखमवस्थातुं प्रभवेत् । अत एव चापेक्ष्यते परस्परं विभिन्नत्वमेतेषाम् ।

ब्राह्मणादिनिष्ठाश्चामी सत्वादिगुणास्तज्जातीयानां स्त्रीपुरुषाणां शुक्रशोणितयोः सूक्ष्मतयावतिष्ठमानास्तज्जन्ये गर्भेऽनुवर्तन्ते । तद्गताश्च तत्तद्गुणोचितस्याहारादेरासेवनेनाभिवर्धन्ते । भवन्ति चाभिवृद्धाः श्रेयसे परमाय । गर्भगतगुणप्रतिकूलाहारादिसंप्रयोगे तु न तत्रान्यो गुणो बद्धमूलत्वमुपयाति नापि पूर्वः संवर्धते । एवं च सत्युभयतो भ्रष्ट इवायं देहो परं क्लेशमनुभवति न चापि प्रभवति कार्यं किमपि सम्यगनुष्ठातुम् । यश्च ब्राह्मणादीनामाहारादिविधिः सोऽयमेव तत्तद्बीजानुवृत्तगुणप्रवृद्धेर्हेतुः । तद्विपरीतः पुनस्तत्परिक्षयस्यैवेत्यत एव न सेव्यं ब्राह्मणादिभिर्भिन्नजातीयानामन्नम् । अत एव चोक्तं राजान्नं तेज आदत्त इत्यादि ।

सत्वगुणविशिष्टस्य ब्राह्मणस्य सात्विकेष्वेव कर्मसु प्रवृत्तिर्नैसर्गिकी । अत एव च सोऽयं सात्विकेष्वेव कर्मसु प्रावीण्यमासादयितुं प्रभवेन्न खल्वेवं राजसेष्वन्येषु वा । अपहाय सात्विकानि कर्माण्यपरत्र प्रवर्तमानोऽयं न केवलं तत्रैव प्रतिहतमनोरथः स्यात् प्रत्युत स्वीयमपि गुणं (आजानसिद्धं) चपलंचेतस्कतया परस्तादवलम्बितुं न प्रभवेत् । अत एव स्वीयमेव कर्मावलम्बनीयं ब्राह्मणादिभिर्नान्यदीयमिति स्मर्यते । यच्चोक्तं भगवता गीतासु "स्वधर्मे निधनं श्रेयः परधर्मो भयावह" इति तदेतदप्येतदभिप्रायकमेवेत्येतदपि द्रष्टव्यम् ।

उक्तपूर्वमेवास्माभिः शुक्रशोणितयोः सूक्ष्मतया ऽवतिष्ठन्ते सत्त्वादयो गुणा इति। ततश्च समानजातीययोरेव स्त्रीपुंसयोश्चेत्संभोगस्तदा समानगुणविशिष्टयोरनयोः शुक्रशोणिताभ्यां समुत्पन्नो गर्भोऽपि तद्गुणविशिष्ट एव स्यात्। यदि पुनर्विजातीययोः स्त्रीपुरुषयोः समागमः सम्पद्येत तदा विभिन्नयोर्गुणयोः साङ्कर्यं स्यात्। तज्जन्यश्च गर्भः संकीर्ण इति व्यपदिश्यते। शुक्रस्य च शोणितापेक्षया प्राबल्यादीदृशस्य गर्भस्य यस्मात्पुंसः समुत्पत्तिस्तच्छील एवायं प्रायशः संलक्ष्येत तन्निष्ठगुणानुकूलेष्वेव कर्मस्वेष प्रवर्तेत। अत एव चोपन्यस्तं स्मृतिकृद्भिः "यस्तु स्वपितरं द्वेष्टि तं विद्यादन्यरेतसमिति।"

संकीर्णश्चायं गर्भो न मातृजातीयगुणविशिष्टो नापि वा पितृजातीयगुणसम्पन्नो भवति। किन्त्वन्यविधैरेव कैरपि गुणैः सम्पन्नो भवति। यथा गर्दभ्यामश्वतः सम्पन्नो गर्भो न गर्दभजातीयो नापि वाश्वजातीयः परन्त्वन्यविध एवाश्वतरो नाम। अतश्चैवं विधानां संकीर्णानां मातापितरजातिसमावेशायोगादपरैव जातिः कल्पयितुं युक्ता। युक्तं च तदुचितमेवास्याः कर्मापि योजयितुम्। अनुलोमः प्रतिलोमश्चेति द्वेधा ऽयं सङ्करः। तज्जातानां च विभिन्ना एव जातय इति न्याय्यमेवैतत्।

एवं च परमात्माभिलाषानुगुणबीजसंशुद्धिसंरक्षणमेव जातिभेदे मूलमिति सिद्धम्।

सति जातिभेदे सत्यां च तदुचितायां व्यवस्थायां नूनमाढ्यतमो भवेद्देशः। तदा हि स्वस्वमेव कर्मावलम्बेरंस्तास्ता जातयः। कुलक्रमप्राप्तेन च संस्कारविशेषेण परं पटीयस्त्वमापादयेयुस्तस्मिन्। तस्य तस्य च कर्मणस्तत्तज्जातिमात्रायत्ततया कापि व्यवस्था संपद्येत। सम्पन्नायां च तस्यां सुखं जीवेयुस्तास्ता जातयो विन्देयुश्च समुन्नतिमभ्यधिकाम्। सम्प्रति पुनर्विद्यन्ते जातयो न पुनस्तदुचिता व्यवस्था वशवर्तीत्यत एव चाव्यवस्थं तेषु तेषु कर्मसु प्रवर्तमानास्तास्ता जातयो नितान्तमेव दुःखायन्ते।

दैवमात्रायत्ततया च जातेर्नास्ति प्रज्ञावतामुन्नतजातिषु मात्सर्यावसरो नापि वा गर्हणावकाशो निकृष्टासु । किमत्र क्रियतां दैवायत्ते वस्तुनीति । अतश्च यदुच्यते कैश्चित्कलहमूलकतया जातिभेदो भारतवर्षस्यावनतिमात्राय प्रकल्पत इति तदेतदनभिज्ञतामात्रमूलकमेवेति भ्रमः ।

विलुप्ते च जातिभेदे चक्रीकृतचापेन कुसुमचापेन प्रोत्साहितो व्यभिचारोऽपि प्रभिन्नसेतुः शनैः शनैर्मुखमुन्नयेत् । तदाहि तज्जन्यायास्तदजन्यायाश्च सन्ततेर्न कश्चिद्विशेषः स्यादिति । न हि विना धर्मं नीतिः स्थिरपदत्वमुपगच्छेत् । न चापि धर्मो विना जातिभेदमिति । जातिभेदे पुनर्नैकमपि दोषं पश्यामः । प्रत्युत भूयांस एव गुणान् गोचरीकुर्मः । विस्तरभिया तु नात्र प्रपञ्चयितुं प्रभवाम इति ।

---

जयपुरराजसभापण्डितश्रीमधुसूदनविद्यावाचस्पतिमहाशयानाम्—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत"त्येवंविधप्रमाणवचनैर्योनिभेदमूलको जातिभेद इत्येके । (१) । ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणै रित्यादिवचनैर्गुणभेदमूलको जातिभेद इत्यन्ये । (२) । न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतमित्यादिवचनैः कर्मभेदमूलको जातिभेद इति परे । (३) । चातुर्वर्ण्यं मया सृष्टं गुणकर्म विभागशः–इत्यादिवचनैर्गुणकर्मभेदमूलको जातिभेद इत्यपरे ॥(४)॥ अथवा सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते-ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । " तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम् । तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ।" समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते । जातिहीने गुणहीने चेत्यादिप्रामाणिक-

यत्त्वनैर्योनिगुणकर्माणि विशिष्टान्येव जातिभेदस्य मूलमिति विद्वांसः। त्रापि योनिः प्रधानं गुणकर्मणी तूपष्टम्भके इति सिद्धान्तः।

यदि जातिभेदो न स्यात् तर्हि कदा केन किं कर्तव्यमिति गुणकर्मव्यवस्था व्युच्छिद्येत। अव्यवस्थायां च भूयांसोऽनर्थाः प्रवर्तन्ते इति प्रबन्धान्तरेण गुणदोषाः प्रदर्शयिष्यन्ते। इदमेव तावदत्र प्रदर्श्यते, यदिह जातिभेदो नितान्तमावश्यक इति। यथा ह्येकस्मिन् मनुष्यशरीरे दक्षिणेनैव पाणिना भोजनं कुर्वन्ति, वामेनैव तु शौचम्। नेतरदितरेण शक्यमपि। यथा वा पादाभ्यामेव गम्यते, गन्तुं पारयन्तावपि हस्तौ न गमने विनियुज्येते। किन्त्व-न्यस्मिन् कर्मणि व्याप्रियेते। एवमेव सम्भवदपि ब्राह्मणकर्म न शूद्रेण कर्तव्यम्। शूद्रकर्म च ब्राह्मणेन। [१] नातिपक्षेऽप्येवमय-मर्थो दृश्यते। महाराजपुत्रो नितान्तमयोग्योऽपि स एव राज्यास-नेऽभिषिच्यते न त्वन्यः कश्चित्पथिकः सर्वविधनीतिविद्यासंपन्नो-ऽपि राज्यप्रबन्धदक्षोऽपि। अयोग्योऽपि पुत्र एव पित्रासनेऽधि-कर्तव्यो न तु योग्यतावानप्यन्य इति हि नीतिर्यानेव भूयसो गुणा-नाश्रित्य व्यवस्थापिता तानेव गुणानाश्रित्य चातुर्वर्ण्यव्यवस्थापि जातिभेदरूपा प्रवृत्तेति बोध्यम्॥ [२]॥ यथा वा राजदत्ताधिकार-वतां सर्वेषामक्षदर्शकानामन्यस्यान्यदीयकर्मकरणयोग्यतावत्त्वेऽपि नान्यस्यान्याधिकारप्रवेशो रोचते तदीश्वराय। एवमेतत् खलु— "ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्। वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम्"— इत्यादिवचनसिद्धविभिन्नाधिकारवतां ब्राह्मणादीनामन्योन्याधिकारप्रवेशोऽवश्यमीश्वरप्रकोपायैव प्रभवे-दित्यध्यवसीयते। तस्मादीश्वरनीतिविरुद्धोऽयमर्थः स्यात्— यदि जातिभेदव्यवस्थामुपेक्ष्यैव कश्चिद् यदृच्छया साङ्कर्याय प्रवर्तेत। अव्यवस्थायाः सर्वलोकस्थितिप्रच्यावकत्वात्॥ [३]॥ इदं तावद्गु-णकर्मभेदेन जातिव्यवस्थां मन्यमानानां सन्तोषाय नीतिप्रसङ्गना-पात्तम्। वस्तुतस्तु योनिभेदेनैव जातिव्यवस्थास्वीकारपक्षे—यथा

मूर्द्धभागो विज्ञानेन, वक्षोविभागो विक्रमेण, उदरविभागोऽन्नसंग्रहेण, पादविभागस्तु तत्त्रितयसंसेवनेनोपकरोति न त्वन्यकर्माणि कुर्वाणा अन्ये विभागाः प्रवर्तन्ते, स्वस्वगुणकर्मविभागेनैव सृष्ट्यादावुत्पादितत्वात् । एवमेव जगतोऽप्ययं ब्राह्मणभागो विज्ञानेन, क्षत्रियविभागो विक्रमेण, वैश्यविभागोऽन्नसंग्रहेण, शूद्रविभागस्तु तत्त्रितयसंसेवनेनोपकरोति, न त्वन्यकर्माणि कुर्वाणा अन्ये विभागाः प्रवर्तन्ते, स्वस्वगुणकर्मविभागेनैव सृष्ट्यादावुत्पादितत्वात् । यथा च वालिशत्वाच्छिरसा गच्छन् क्लिश्नाति एवमेवेदानींकालेऽपि प्रज्ञादोषादुन्मर्य्यादं प्रवर्तमानो ऽन्यवर्णाभिमानी भूत्वा ऽन्यवर्णानुबन्धीनि कर्माणि कुर्वाणः क्लिश्यन्नेव दृश्यते । अस्य चेदानीन्तनस्य चातुर्वर्ण्यदुरवस्थाजनितक्लेशभोगस्य चातुर्वर्ण्यमर्यादाभङ्ग एव मुख्यो हेतुः । तस्माद् ब्राह्मणेनैव ब्राह्मणकर्म कार्य्यम्—ब्राह्मणेन च ब्राह्मणकर्मैव कार्य्यमित्युभयथा नियमोऽनुरोद्धव्यः । स जातिभेदव्यवस्थामन्तरेण न सिध्यतीत्यवश्यं जातिभेदः फलवान् । जातिभेदाभ्युपगमे तदनुसारेण कर्मप्रवृत्तौ च ब्राह्मणाद्यधिकारसिद्धकर्मणां सिद्धेः सौकर्य्यं नाप्राप्तिश्च गुणः । अव्यवस्थायां पुनर्याथातथ्येनार्थासिद्धिः क्लेशाधिक्यं चेति भूयान् दोषः— इत्याद्यूह्यं समीक्षावृद्धैः ॥

---

त्रिवङ्कुरराजकीय संस्कृतविद्यालयाध्यक्षाणां पण्डितप्रवराणां
श्रीमतां त. गणपतिशास्त्रि महाशयानाम् ।

जातिभेदापरनाम्नश्चातुर्वर्ण्यस्य तत्त्वं मत्प्रणीते भारतानुवर्णने परस्प्रकाशिते यथान्यायमीदृगिति समर्थितं तदिहोपयोगार्थमनूद्यते—

इह हि मानुषाणामवर्जनीयाश्चतस्रो वृत्तयो भवन्ति —विद्यावृत्तिः शूरवृत्तिः अर्थवृत्तिः शुश्रूषावृत्तिरिति ।

लोकतत्त्वस्य दैवतत्त्वस्य च ज्ञानं विद्या । तदनुसारिणी वृत्ति-र्विद्यावृत्तिरुच्यते ।

सर्वोपायैः शत्रुनिग्रहः शूरवृत्तिः ।
वाणिज्यं कृषिः पशुपालनं शिल्पं चार्यवृत्तिः ॥
परिचरणं शुश्रूषावृत्तिः ।
जनानां योगक्षेम एतास्वेव चतसृषु वृत्तिष्वायतते ॥

आसां व्यस्तानां मिलितानां वा यथारुचि यथासामग्रि परिग्रहमविशेषेण जनाः कर्त्तुमर्हन्ति । एष न्यायः पुरा जरत्तमार्यैः स्वीकृतो बभूव । यो हि यस्या वृत्तेरनुरूपो दृष्टः, स जनस्तस्यां वृत्तौ नियुक्त आसीत् ।

वृत्तीनां च साधारणत्वाद् ब्राह्मणादीनां शब्दानामनियमेन व्यवहार आसीत् । विद्यावृत्त्या हि जनो ब्राह्मण इति व्यवहृतस्तत्त्वज्ञानात् । शूरवृत्त्या क्षत्रिय इति राजन्य इति च व्यवहृतो विपदो रक्षणात् । अर्यवृत्त्या वैश्य इति व्यवहृतो वाणिज्यादौ प्रवेशात् । शुश्रूषावृत्त्या शूद्र इति व्यवहृतः शोचनात् ।

तत्र प्रथमवृत्तिर्गुणबाहुल्यादुत्कृष्टा भवति । द्वितीया वृत्तिर्हिंसासम्बन्धात् तदपेक्षया किञ्चिदवरा । तृतीया वृत्तिरसत्यसम्बन्धात् ततो निकृष्टा । चतुर्थी वृत्तिस्तु बुद्धिगुणहानेः सर्वापेक्षयाधमा ।

एतदेव वृत्तीनां तारतम्यं ब्राह्मण ईश्वरस्य मुखाज्जातः, क्षत्रियो बाहोर्जातः, वैश्य ऊरोर्जातः, शूद्रः पादाज्जात इति वदता वेदेन प्रकाश्यते ।

क्रमेण पितृषु पुत्रान् स्वस्ववृत्तौ प्रोत्साहयत्सु ता वृत्तयः कालान्तरे कुलवृत्तयः सम्पन्नाः । वृत्तिपरिग्रहे कामचारस्तस्मिन्नपि काले स्थित एव । किन्तु कुलानुवृत्तौ वृत्तीनां गुणातिशयस्य दर्शनात् कामचारापेक्षया कुलानुवृत्तौ जनानामधिक आदर उपजात आसीत् । प्रायेण हि पुरुषाणां स्त्रीणां वा गुणा दोषाश्च सन्ततिमुपसङ्क्रामन्तो दृश्यन्ते । गुणप्रत्याशया हि लोकः कुलीनं बहुमन्यते ।

सर्वस्य च जगतस्तदा शिशुभावेऽवस्थानाद् वृत्तीनां सौष्ठवं स्वप्रयत्नेन केवलमार्यैः साधनीयमासीत् । नहि त्रिसहस्रवर्षेभ्यः प्राक् प्रबुद्धा काचिन्मानुषजातिरार्यानन्तरेणाभवत् ।

आभ्यां हेतुभ्यां * वृत्तीनां सन्तानेष्वनुवृत्तिं कालेन ते नियमयामासुः ।

अनेन नियमेन ब्राह्मणजातिः क्षत्रियजातिर्वैश्यजातिः शूद्रजातिरिति चतस्रो जातयः सिद्धा बभूवुः । अत एव वृत्तिभेदेन जातिभेदः कल्पित इति भारतमाह— †

'ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्' ।

न चायं वर्णभेदः पूजाभेदस्य हेतुरपि सन् जनानां मिथः कलहमीर्ष्यां वा जनयामास । ते हि वर्णाः स्वस्वकृत्यानि तथा निरवर्त्तयन्, यथा ते परस्परेण परस्परमुपकृतमेव मेनिरे । जनसमुदायस्य स्वास्थ्यं, तृप्तिः, सुखं च वर्णधर्मैरुपचितं बभूव । जनस्य जातिमात्रेण नोत्कर्षो भवति; किन्तु जात्युचितैर्गुणैराचारैश्चेति खल्वार्या उद्घोषयन्ति ।

अधिकारश्च विद्याभ्यासे त्रयाणां वर्णानां समानः कल्पितः । शूद्राणां वेदाध्ययनस्याभावेऽपि ब्राह्मणादिभ्योधर्मतत्त्वस्य श्रवणमनुमतमेव । स्वजातिवृत्तावशक्तस्यान्यजातिवृत्तिरनुजज्ञे ।

गुणविशेषशालिनोऽवरवर्णस्य ब्राह्मणत्वमपि सुलभमासीत् । अत एव—'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चेति शूद्रताम्, इति मनुराह ।

अग्रयवर्णानाम् अवरवर्णात् स्त्रीपरिग्रहणं न निषिद्धमासीत् ।

ईश्वरः साक्षितया स्थित इति विश्वासाद् रहस्यपि स्वस्वकृत्याद् व्यतिक्रमं प्रायेण वर्णा न चक्रुः ।

एवं तावच्चातुर्वर्ण्यमभिन्नमर्यादमेकं कुटुम्बमिव स्नेहस्यैकम-

---

* वृत्तीनां कुलानुवृत्तौ गुणदर्शनमेको हेतुः । वृत्तिसौष्ठवस्य स्वप्रयत्नमात्रसाधनीयत्वमपरो हेतुः ।

† शान्तिपर्वणि १८८. अध्याये ।

त्यस्य वृत्तिनियमस्य दैवभक्तेश्च परमं फलं परस्सहस्राणि वर्षाण्यनुपद्रुतमनुबभूव।

केचित् पुनर्ब्राह्मणानां क्षत्रियसहायानां स्वार्थपरतामेव जातिव्यवस्थायां हेतुमूहन्ते; ऊहस्थानानि च दर्शयन्ति—

१. 'ब्राह्मणो वै सर्वा देवताः'

२. ब्राह्मणे प्रीते जगदीश्वरः प्रीतो भवति।

३. याजनम् अध्यापनं प्रतिग्रहश्चेति वृत्तयो ब्राह्मणस्यैवार्हाः।

४. अपराधे महत्यपि ब्राह्मणस्य देहदण्डाभाव इति।

वस्तुतस्तु जरत्तमा ब्राह्मणा न स्वार्थपरा बभूवुः। ते हि प्रकृत्या नरभोगान् नातीव चकमिरे शान्त्या दान्त्या च युक्ताः सन्तो वनेषु वनकल्पेषु ग्रामेषु च वसन्तः सुलभैर्मिताहारैः सन्तृप्ता ईश्वरोपासनया विद्याव्यासङ्गेन तीर्थयात्रया च ते कालं निन्युः, राज्ञा ते काले काले समाहूताः कार्यसमन्त्रणं पौरोहित्यं वा चेरुः।

अतस्तेभ्यः सम्पद्यमानानुपकारान् स्मरद्भिः सर्वैर्वर्णैर्ब्राह्मणजातये पूर्वोक्तोऽसाधारणो बहुमानः प्रीतिदाय उपकल्पित इति युक्तमुत्पश्यामः।

तस्मिन्नपि प्रीतिदायेऽसत्पूर्वब्राह्मणानामास्था नैवासीत्। अत एव ते धनार्थं याजनमध्यापनं च निनिन्दुः, प्रतिग्रहं च पातकहेतुमुद्घोषयन्तिस्म। मनुश्चाह—

सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा॥ इति।

अवश्यञ्च विश्वामित्रोपाख्याने परशुरामचरितं चात्र विषये स्मरणमर्हतः। विश्वामित्रो हि ब्राह्मणत्वाय न धनतृष्णां स्वीकृतवान्; प्रत्युत राज्यभोगान् वर्जितवान्; परशुरामश्च सकलक्षत्रियजयेनार्जितमपि राज्यं परित्यज्याश्रमवासिनामुचितां स्वजातिवृत्तिं भेजे।

'ब्राह्मणो वै सर्वा देवता' इत्यादि वचनजातं त्वर्थवादो भवति। गुणभूयिष्ठो जनो माननीय इत्येतावति चार्थे तस्य तात्पर्यम्। तमेतं

गुणहेतुं सन्तं जातिनियमं जना दोषे पर्यवसाययन्ति स्म कालान्तरे। कथम् ?

उक्ते जातिनियमे निरङ्कुशमनुवर्त्तमाने गतेषु परस्सहस्रेषु वत्सरेषु क्षत्रिया वीरवृत्तौ वैश्या वाणिज्यवृत्तौ चासक्ताः सन्तो वैदिकेषु यज्ञकर्मसु ब्राह्मणान् प्रायः प्रतिनिधातुमारेभिरे। प्रचीयमाने प्रतिनिधानपक्षे तेषां ब्राह्मणेष्वतिबहुमान आसीत् वेदाध्ययने चावश्यकत्वबुद्ध्यभावादप्रवृत्तिरासीत्। वेदशास्त्रविज्ञानं ब्राह्मणमात्रशरणं बभूव। ब्राह्मणाश्च बहवः सुलभया पूजया सन्तृप्ता विद्यापरिशीलने यथापूर्वं श्रद्धां न बबन्धुः।

एवं क्षीयमाणे विद्याप्रचारे सर्वेषां वर्णानां विद्यामूलाः सद्गुणा विरला आसन्। क्रमेण तेषां परस्परस्नेहः समदृष्टित्वं 'चातुर्वर्ण्यमेकं कुटुम्बम्' इति बुद्धिश्चास्तं जगाम। प्रत्युतोत्तमवर्णानामवरवर्णेष्ववज्ञा, तेषामुत्तमवर्णेष्वीर्ष्या चाङ्कुरिता बभूव। दोषकलुषाश्च वर्णानामाचारा बहुलीबभूवुः।"

एषा चातुर्वर्ण्यव्यवस्था जगत्सृष्टिसमकालप्रभवा वा भवतु, ततः किञ्चिदुत्तरकाले प्रादुर्भूता वा, यथा वयं विश्वसिमः, त्रिचतुरसहस्रवर्षमात्रप्राचीना वा भवतु यथा नवीनाः पण्डितास्तर्कयन्ति; सर्वथैषा जनता योगक्षेमार्थानां वृत्तीनां सौष्ठवाय शुचित्वाय च भवत्येव परमोऽभ्युपाय उपायान्तरातिशायीति सर्वैरुक्तप्रक्रियया बोद्धुं शक्यम्। दोषास्तु तस्यां सम्भाव्यमानाः प्रतिविघातव्याः।

यदि च हिन्दवः संस्कृतविद्याप्रचारणेन स्वमतस्वधर्मानुरागं प्रत्यापद्य वर्णानामेककुटुम्बतावुद्धिं श्लथां दृढयेयुः, तर्हि न दोषाः परस्परेर्ष्यावज्ञाविद्वेषादयो जनताक्षेमबाधका जातिभेदसम्भाव्याः सम्भवेयुः गुणाश्च जनक्षेमहेतवः समुल्लसेयुः।

——:*:——

## वार्ताः सम्पादकाभिप्रायाश्च ।

साम्प्रतं भारते सर्वेष्वेव प्रदेशेषु तासां तासां जातीनांस्वस्व-समाजाभ्युदयलाभार्थं तास्ताः समितयः स्थापिताश्च स्थाप्यन्ते च। ब्राह्मणजातिरप्यस्मिन् विषये न निश्चिता तिष्ठन्ति । युक्तप्रदेशे स रयूपारीयादीनां ब्राह्मणानां सभा बहोः कालादेव वयं शृणुमः जानीमश्चान्तरान्तरा तासां कार्यजातम्, द्रष्यामश्च सभास्ताराणा-मध्यवसाय मवलोक्य ।

वङ्गेष्वपि न खलु नायमुद्योग आत्मलाभमधिगतः। कायस्थ-सभेत्यादीनां परिषदां नामानि साम्प्रतं सर्वेषामेव वङ्गीयानां श्रवण-विवरं प्रविशति । ब्राह्मणाः पुनस्तत्रत्याः सम्यगुदासीना एवावर्त्त-न्त । समुन्नततराणामेषां नासीदिव किञ्चित् करणीयं नाम स्वस-माजार्थम् । सोऽयममीषां प्रमादमदिरामदः साम्प्रतमपसर्पतीव शनैः शनैः । अतीताब्दे कलिकाताराजधान्यां प्रतिष्ठिता कापि ब्राह्मणसभा । जानपदमहासभायाः सम्मेलनसमयेऽस्या अपि परि-षद् आसीत्कोऽप्युत्सवः । शृणुमोऽस्या एव सभायाः कापि शाखा वर्धमानान्तर्गते ग्रामविशेषे महीयसोत्सवेन वैशाखे मासि प्रति-ष्ठितेति । बहवो वङ्गीयाः ब्राह्मण-पण्डितास्तत्र सममिलन् । अस्या-स्तस्मिन् दिने सभापतित्वं राज्ञः श्रीप्यारीमोहनमुख्योपाध्यायस्य सूनुना सम्पादितम् । ब्राह्मणसभायाः सभापतिर्ब्राह्मण एव युज्यते, ब्राह्मणश्च शिक्षितश्चासौ तदानीन्तनः सभापतिरिति नानया दिशा किमप्यपवदितव्यं दृश्यते । किन्तु सोऽयं वृत्तान्तो ब्राह्मणपण्डि-तानां कमप्यतिमहान्तमपकर्षं द्योतयति । कच्चिन्नजानन्त्यमी तस्मि-न् सम्मेलने समवेताः पण्डितमहाभागा यत्पुरा किलैतादृशं कृत्यं शास्त्रजीविभिस्तादृशैरेव समपाद्यत, न तु राजशिरसि भारः स समारोप्यतेति । तर्हि सिद्धान्तित मर्थं साधयितुं राजसाहाय्यमात्र-मपेक्ष्यतेति सत्यम् । इदानीन्तु हन्त सिद्धान्तेऽप्यसमर्थास्ते सं-वृत्ताः । अतएव पण्डितोचितेषु पदेषु साम्प्रतं राजानः शोभन्ते,

पण्डितास्तु साधारणा इव सञ्जाताः । तर्हि म्रियतां म्रियतां वेति न कापि गरीयसी क्षतिरुत्पत्स्यते समाजस्येति हि साम्प्रतं बहूनां बुद्धिरुदेति । यथोचितमाचरद्भिरपाक्रियतामेष कलङ्कलेपोऽस्माकं परमप्रतीक्ष्यैः ब्राह्मणपण्डितमहाभागैरिति साञ्जलिबन्धं सनिर्बन्धं च प्रार्थयामहे ।

तस्याः किल शाखासभायाः प्रतिष्ठासमये समुत्साहिभिः कैश्चित्पण्डितैः समुच्चारिताः काश्चिदतिस्फीतावाचः, यथा खलु सर्वास्वेव सभास्वाकर्ण्यन्ते । न वयं वाग्भिस्तृप्यामः । ननु युष्माकं कर्माण्यवलोकयितुमुत्कण्ठिताः स्मः ।

* * * *

अस्ति पूर्ववङ्गेषु ढाकानगर्यां 'सारस्वतसभेति' कापि परिषत् । संस्कृतशिक्षावर्धनं तस्याः मुख्यं प्रयोजनम् । प्रतिवत्सरं तया विद्यार्थिनः परीक्ष्यन्ते, योग्याश्चैतेषु बिरुदादिदानेन पुरस्क्रियन्ते । स्वल्पदिनपूर्वमस्याः परिषदः षड्विंशवार्षिकोत्सवः सम्पन्नः । तत्र केनापि विश्रुतेन विदुषा सखेदं प्रकाशितं यत् पञ्चविंशत्यापि वर्षैः सभयानया नैकोऽपि यथार्थः पण्डितः सम्पादित इति । विषीदामो ऽवगमतिमात्रं वृत्तान्तममुं वाचयन्तः । अन्विष्यतामस्यैतावतो वैफल्यस्य कारण, विधीयतां च समुचितः प्रतीकारः ।

* * * *

सौरचैत्रस्य चतुर्दशदिवसे गुरुवासरे सायं कलिकाताराजकीयविद्यामन्दिरे तत्रत्यैर्विद्यार्थिभिः महाकवेः कालिदासस्य मालविकाग्निमित्रं नाम नाटकमभिनीतम् । तत्र खलु श्रीमान् सपत्नीको वङ्गेश्वरो दर्शकपदमलमकार्षीदिति विज्ञाय परमानन्दामो वयम् । श्रूयते अभिनयोऽयं श्रीमतां महामहोपाध्यायानां हरप्रसादशास्त्रिमहोदयानां परिदर्शनेन चारुतर एव समपद्यतेति । नाटकानामभिनयेन भाषाया महत्युन्नतिः साधिता भवतीति सुविदितमेव । प्रार्थयाम एवमेवान्तरान्तरा संस्कृतनाटकमभिनीय वर्द्धयन्तु गीर्वाणवाणीमिति ।

भारते पुण्यतमं श्रीसेतुबन्धरामेश्वरमन्दिरं सुप्रसिद्धम्। अस्य पर्यवेक्षणाय्याधिकृतेन साम्प्रतमस्यहितं किमपि प्रक्रान्तम्। स खलु प्राचीनं मन्दिरं विनाश्य नूतनं निर्मातुमिच्छति। न कोऽपि हिन्दुरस्य कृत्यमिदमनुमोदेत। नापि भारतशासनाधिकृतानामप्यस्ति सम्मतिः। प्राचीनां कीर्त्तिं विनाशयितुं नैते वाञ्छन्ति। विशेषतस्तु प्रकृतं मन्दिरं प्राचीनस्थापत्यविद्याया अत्युत्कृष्टं परिचायकम्। परन्तु मन्दिराध्यक्षं निषेद्धुं न राजशक्तिरपि प्रभवति। तथा सत्यनया हिन्दुधर्मे करः प्रसारितः स्यादिति। नापि हिन्दूनामपि युक्तं तदनुमोदनम्। मन्दिराध्यक्षेण विषममत्यनुचितं च कर्तुमारब्धमिति को नाम न वदेत्। न जानीमः कतमो नाम पुरुषार्थस्तस्यैतेन कृत्येन सम्पद्येतेति।

*　　*　　*　　*

भगवतो जगन्निवासस्याभिप्रायेण च प्रसादेन च पत्रिकायास्तृतीयमपिवर्षमतीतम्। अस्मिन् वर्षे नैकैः प्रकारैरपराधिनो वयं श्रीमतां पाठकमहाशयानां सविधे। गच्छतो जनस्य, भवत्येव क्वचित् क्वचित् स्खलनम्। विशेषतस्त्वेतादृशां जनानां यदनेकानि स्खलितान्युत्पद्येरन्, न तत्र कोऽपि विस्मयावकाशः। सर्वथापि भवन्तः कृपयास्माकं तांस्तानपराधानिति सविनयं सप्रणयं साग्रहं च प्रार्थयामहे।

वाचकानां निरसितुं वैमनस्यं, सम्पादयितुं च सौमनस्यं प्रयस्यन्तोऽपि नास्मिन् वर्षे समीहितमध्यगच्छाम। कोऽत्रापराध्यतीति दैव मेव वेत्ति। प्रभवत्यपि दैवे न वयं विसृष्टपुरुषकाराः सर्वथा तदेवाराधयामः। बहवः प्रयत्नाः प्रयुक्ताः विनष्टाश्च बहवः, न तथापि न तान् पुनः पुनः प्रयुञ्जते पत्रिकापरिचालकाः। अस्त्यस्माकं द्रढीयान् विश्वासो यदागामिनि वर्षे ते ते दोषाः न पुनः कवलयेदस्माकं पत्रिकां यदि श्रीमतां ग्राहकाणां तथाविधोऽनुग्रहरसो नापचीयेतेति।

वाराणस्यां बङ्गीयविद्यार्थिनां कृते नास्ति, कापि व्यवस्था। इतरेषां तु स्वल्पापि वर्त्तते। एते खलु बङ्गीयविद्यार्थिनः इहागत्य परं कष्टमनुभवन्ति। प्राक् तेषां वासार्थं स्थानमेव महद्दुर्लभम्—भोजनादिकन्तु कियद्दुर्लभमिति त एव ज्ञातुं प्रभवेयु र्ये हि स्वयमनुभूतवन्त इमां दशाम्। एतत्तु बहुशोऽस्माभिरालोचितम्। तदर्थमेव च नाम्ना "बङ्गीयछात्रनिवासः" अत्र स्वात्मलाभमधिगत इत्युक्तपूर्वमेवास्माभिः। परमद्य नितरां सन्तुष्यामो यद् अस्माकं मित्रवरः पण्डितः श्रीविजयकृष्णवेदान्तवागीशमहाशयोऽस्य सम्पादकताम्, भुवनविघोषितपाण्डित्यवैभवाः श्रीमन्तो राखालदासन्यायरत्न-कैलासचन्द्रशिरोमणिप्रमुखा महामहोपाध्यायाः, मणीन्द्रचन्द्रनन्दीसदृशा महाराजाः, आशुतोषमुखोपाध्यायप्रभृतयश्च महात्मानोऽस्य साहायकपदमलङ्कुर्वन्ति। आशास्महे इतः परमस्य कृत्यानि सुष्ठु सम्पत्स्यन्ते। किन्तु सनिर्बन्धं वयं स्मारयामो यत् छात्रेभ्यः केवलं वसतिप्रदानमेव नास्य छात्रनिवासस्य चरमे कृत्ये परिणमतामिति।

* * * *

अहोः कालादेव नयं पत्रिकायां चित्राणि प्रकाशयिष्यन्त इत्यावेदयाम न तु प्रभावाम प्रदर्शयितुं तदुक्तेः साथेक्य परं जिहास एव वयं तदर्थम्। अतश्चतुर्थे वत्सरे चित्रप्रकाशनं दृढमस्माभिर्निश्चितम्। पौषमाघयोः पत्रिकायां भारतीयानां संस्कृतपण्डितानां सह संक्षिप्तेन जीवनचरित्रेण प्रतिमूर्त्ति-प्रकाशनं विज्ञापितं, अभ्यर्थितं च तत्र साहाय्यं पाठकमहाशयानां न तत्तैः करुणया विस्मर्त्तव्यमित्यपि पुनः पुनः प्रार्थयामहे।

तत् किमन्यत्, प्रसीदतु भगवान् विश्वेश्वरः प्रसीदतु चानुग्राहको ग्राहकगणः, यथा पुनरपि स्वल्पेनैव कालेन मनोज्ञतरा सतीयं पत्रिका वाचयतां जनानां चित्तमनुरञ्जयेदिति शिवम्।